# प्रथमोऽङ्कः

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

**सूत्रधारः—**

**पादः पायादुपेन्द्रस्य सर्वलोकोत्सवः स वः ।**
**व्याविद्धो नमुचिर्येन तनुताम्रनखेन खे ॥ १ ॥**

एवमार्यमिश्रान् विज्ञापयामि । अये किं नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । पश्यामि ।

---

रमाशङ्करशर्माऽस्मि त्रिपाठी भासनाटके ।
दूतवाक्ये रमानाम्नीं विवृतिं दर्शयाम्यहम् ॥

**टीका—दूतवाक्यम्**—दूतस्य = युधिष्ठिरादीनां सन्देशवाहकस्य श्रीकृष्णस्य वाक्य वचनम्, षष्ठीतत्पुरुषः, तदधिकृत्य कृतं रूपकं दूतवाक्यम्, अथवा—दूतस्य = सन्देशवाह श्रीकृष्णस्य वाक्यम् = वचनम्, संवाद इत्यर्थः, यस्मिन् तत् दूतवाक्यम् ॥

**नान्द्यन्त इति** । नन्दयति = स्वाभिघातानन्तरं नाटक-प्रयोगारम्भस्य सूचनेन आनन सामाजिकानिति नान्दी, नन्दन्ति देवताः अनया वा नान्दी = भेर्यादिकम् तस्याः अ अवसाने । भेर्यादिताडनमपि मङ्गलजनकमेवेति धार्मिकाः । सूत्रधारः = रङ्गशालायाः स्थापकः प्रधानः नटः । अत्र लक्षणया सूत्रशब्दः नाट्योपकरणादिवाचकः अभिनयनिर्देशपरो तल्लक्षणञ्चोक्तं यथा—

'नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥'

**अन्वयः**—तनुताम्रनखेन, येन, ( पादेन ), नमुचिः, खे, व्याविद्धः, सर्वलोकोत्सवः, उपेन्द्रस्य, पादः, वः, पायात् ॥ १ ॥

**शब्दार्थः**—तनुताम्रनखेन = नुकीले तथा किञ्चित् लाल नखों वाले, येन = जिस ( पादेन चरण के द्वारा ), नमुचिः = नमुचि नामक राक्षस, खे = आकाश में, व्याविद्धः = बींध ग गया था, फेंक दिया गया था; सर्वलोकोत्सवः = सारे संसार को आनन्द प्रदान करनेवा सः = वह, उपेन्द्रस्य = वामन का, विष्णु का, पादः = चरण, वः = आप लोगों की, [illegible] रक्षा करे ॥ १ ॥

दूतवाक्याभिधं नाटकं चिकीर्षुः कविप्रवरो भासः तस्य निर्विघ्नसमाप्त्यै सूत्र मङ्गलाचरणं सूचयन् उपेन्द्रचरणं स्तौति—**पादेति** । तनुताम्रनखेन—तनुः = र

( पर्दे के भीतर )

हे हे द्वारपालों, महाराज दुर्योधन आज्ञा दे रहे हैं।

**विशेष—नेपथ्ये**—नेपथ्य उस स्थान को कहा जाता है, जहाँ पर्दे के भीतर नाटक के कर्मचारी वस्त्र आदि धारण करके तैयार होते हैं।

**सूत्रधार**—अच्छा, ज्ञात हो गया।

(धृतराष्ट्र के पुत्रों ( दुर्योधन आदि ) का पाण्डु के पुत्रों ( युधिष्ठिर आदि ) के साथ विरोध उत्पन्न होने पर, दुर्योधन की आज्ञा से, सेवक सभा-भवन को तैयार कर रहा है ॥ २ ॥)

( निकल गया )।

। स्थापना ( समाप्त )।

( तदनन्तर काञ्चुकीय प्रवेश करता है )

**विशेष—स्थापना**—नाटकों में प्रस्तावना एवं स्थापना समान अर्थ में प्रयुक्त होते हैं। इससे भावी कथानक का सङ्केत मिलता है।

**काञ्चुकीय**—राजाओं के रनिवास में नियुक्त वृद्ध व्यक्ति कञ्चुकी या काञ्चुकीय कहा जाता है। यह गुणी, विद्वान् तथा धार्मिक होता है।

**काञ्चुकीय**—हे हे द्वाररक्षकों, महाराज दुर्योधन आज्ञा दे रहे हैं—आज सभी राजाओं के साथ सलाह करना चाहता हूँ। अतः, सभी राजा लोग बुलाये जाँय। ( घूम कर, देखकर ) अरे ! यह महाराज दुर्योधन इधर ही आ रहे हैं। जो यह—

(श्यामवर्ण, युवक, धवल रेशमी दुपट्टा धारण किये हुये, श्रेष्ठ छत्र एवं चामर से युक्त, अङ्गराग लगाये हुये, कान्ति-सम्पन्न, आभूषणों के रत्नों की कान्ति से दमकते अङ्गोंवाले, ताराओं के बीच में पूर्णिमा के चन्द्रमा जैसा, ( शोभित हो रहे हैं ) ॥ ३ ॥)

---

शाला = भवनम् ताम्, सभाभवनमिति यावत्, रचयति = सज्जीकरोति, आसनादिभिः सम्यक् सम्पादयतीति भावः। अनुष्टुप् छन्दः ॥ २ ॥

**काञ्चुकीय इति**। सर्वपार्थिवैः—सर्वे = निखिलाश्च ते पार्थिवाः = राजानः तैः, मन्त्रयितुम् = मन्त्रणां कर्तुम्। अभिवर्तते = आगच्छति ॥

**अन्वयः**—श्यामः, युवा, सितदुकूलकृतोत्तरीयः, सच्छत्रचामरवरः, रचिताङ्गरागः, श्रीमान्, विभूषणमणिद्युतिरञ्जिताङ्गः, नक्षत्रमध्ये, पर्वगतः, शशाङ्कः, इव, ( शोभते ) ॥ ३ ॥

**शब्दार्थः**—श्यामः = श्यामवर्ण, युवा = युवक, सितदुकूलकृतोत्तरीयः = धवल रेशमी दुपट्टा धारण किये हुये, सच्छत्रचामरवरः = श्रेष्ठ छत्र एवं चामर से युक्त, रचिताङ्गरागः = अङ्गराग लगाये हुये, श्रीमान् = कान्ति-सम्पन्न, विभूषणमणिद्युतिरञ्जिताङ्गः = आभूषणों के रत्नों की कान्ति से दमकते अङ्गोंवाले; नक्षत्रमध्ये = ताराओं के बीच में, पर्वगतः = पूर्णिमा में

( ततः प्रविशति यथानिर्दिष्टो दुर्योधनः । )

**दुर्योधनः**—उद्धूतरोषमिव मे हृदयं सहर्षं
प्राप्तं रणोत्सवमिमं सहसा विचिन्त्य ।
इच्छामि पाण्डवबले वरवारणाना-
मुत्कृत्तदन्तमुसलानि मुखानि कर्तुम् ॥ ४ ॥

**काञ्चुकीयः**—जयतु महाराजः । महाराजशासनात् समानीतं सर्वराजमण्डलम् ।

**दुर्योधनः**—सम्यक् कृतम् । प्रविश त्वमवरोधनम् ।

**काञ्चुकीयः**—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

**दुर्योधनः**—आर्यौ वैकर्णवर्षदेवौ ! उच्यताम्–अस्ति ममैकादशाक्षौहिणीबलसमुदयः । अस्य कः सेनापतिर्भवितुमर्हति । किं किमाहतुर्भवन्तौ–महान् खल्वयमर्थः । मन्त्रयित्वा वक्तव्यमिति । सदृशमेतत् । तदागम्यतां मन्त्रशालामेव प्रविशामः । आचार्य ! अभिवादये । प्रविशतु

---

स्थित, शशाङ्कः = चन्द्रमा, इव = जैसा, ( शोभते = शोभित हो रहे हैं ) ॥ ३ ॥

काञ्चुकीयः दुर्योधनं विशिनष्टि—**श्याम इति**। श्यामः = श्यामवर्णः, युवा = यौवनसम्पन्नः, सितदुकूलकृतोत्तरीयः—सितेन = धवलेन तद् दुकूलेन = क्षौमेण ( 'क्षौमं दुकूलं स्यात्' इत्यमरः ) कृतम् = रचितम्, उत्तरीयम् = प्रावारः ( 'प्रावारोत्तरासङ्गौ…उत्तरीयं च' इत्यमरः ) येन सः तादृशः, सच्छत्रचामरवरः—सत् = श्रेष्ठम् छत्रम् = आतपत्रम् चामरवरञ्च = प्रकीर्णकश्रेष्ठञ्च ( 'चामरं तु प्रकीर्णकम्' इत्यमरः ) यस्य सः तादृशः, रचिताङ्गरागः—रचितः = लिप्तः अङ्गरागः = विलेपनद्रव्यम् येन तादृशः, श्रीमान् = कान्तिसम्पन्नः, विभूषणमणिद्युतिरञ्जिताङ्गः—विभूषणानाम् = आभूषणानाम्, मणयः = रत्नानि तेषां द्युतिभिः = प्रभाभिः रञ्जितानि = प्रकाशितानि अङ्गानि यस्य तादृशः, नक्षत्रमध्ये—नक्षत्राणाम् = ताराणाम् मध्ये = अन्तराले, पर्वगतः—पर्वणि = पूर्णिमायाम् गतः = प्राप्तः, शशाङ्कः = चन्द्रः, इव = यथा, शोभते इति शेषः। अत्र उपमालङ्कारः । छन्दस्तु वसन्ततिलका । तल्लक्षणम्—'उक्ता वसन्ततिलका तभजा जगौ गः' ॥३॥

**अन्वयः**—इमम्, रणोत्सवम्, सहसा, प्राप्तम्, विचिन्त्य, उद्धूतरोषम्, इव, मे, हृदयम्, सहर्षम्, ( जातम् ); ( अहम् ), पाण्डवबले, वरवारणानाम्, मुखानि, उत्कृत्तदन्तमुसलानि, कर्तुम्, इच्छामि ॥ ४ ॥

**शब्दार्थः**—इमम् = इस, रणोत्सवम् = युद्ध रूपी उत्सव को, सहसा = एकाएक, प्राप्तम् = आया हुआ, विचिन्त्य = सोच कर, उद्धूतरोषम् = विनष्ट क्रोधवाला, इव = सा, मे = मेरा, हृदयम् = हृदय, सहर्षम् = हर्ष-युक्त, ( जातम् = हो गया है ); ( अहम् = मैं ), पाण्डवबले = पाण्डवों की सेना में, वरवारणानाम् = बड़े-बड़े गजराजों के, मुखानि = मुखों को, उत्कृत्तदन्तमुसलानि = उखाड़ लिये गये हैं मूसल के सदृश दाँत जिनके ऐसा, कर्तुम् = करने की, इच्छामि = इच्छा कर रहा हूँ ॥ ४ ॥



**उद्धूतरोषमिवेति**। इमम् = अमुम्, शिरसि सन्निहितमित्यर्थः, रणोत्सवम्—रणः =

( तदनन्तर पूर्वनिर्दिष्ट दुर्योधन प्रवेश करता है )

**दुर्योधन**—इस युद्धरूपी उत्सव को एका-एक आया हुआ सोचकर, विनष्ट-क्रोधवाला-सा मेरा हृदय हर्ष-युक्त ( हो गया है )। ( मैं ) पाण्डवों की सेना में बड़े बड़े गजराजों के मुखों को, उखाड़ लिये गये हैं मूसल के सदृश दाँत जिनके ऐसा, करने की इच्छा कर रहा हूँ (अर्थात् शत्रु-सेना के गजराजों के दाँतों को उखाड़ने की इच्छा कर रहा हूँ ) ॥ ४ ॥

**काञ्चुकीय**—महाराज विजयी बनें। महाराज के आदेश से समूचा राज-समूह बुला लिया गया है।

**दुर्योधन**—अच्छा किया। जाओ तुम अन्तःपुर में।

**काञ्चुकीय**—महाराज जैसी आज्ञा दे रहे हैं ( वैसा ही होगा )। ( निकल गया )।

**दुर्योधन**--आदरणीय वैकर्ण एवं वर्षदेव मेरी ग्यारह अक्षौहिणी सेना का समूह है। बतलाइये इसका सेनापति कौन हो सकता है ? क्या कहा आप दोनों ने—"निश्चय ही यह बहुत बड़ी बात है। ( इस पर ) विचार-विमर्श करके ( ही कुछ ) कहना चाहिये।" यह उचित ( ही ) है। तो आइये, मन्त्रशाला में ही चलें। आचार्य, प्रणाम कर रहा हूँ।

---

युद्धम् उत्सवः = महः इवेति तम् ( 'महस्तूत्सवतेजसोः' इत्यमरः ), सहसा = झटिति, प्राप्तम् = आगतम्, विचिन्त्य = विचार्य, उद्धूतरोषम्—उद्धूतः = विनिर्गतः, दूरीभूत इति यावत्, रोषः = क्रोधः यस्मात् तत्, यस्मिन् तत् वा, इव = यथा, मे = मम, दुर्योधनस्येत्यर्थः, हृदयम् = चेतः, सहर्षम्—हर्षेण = आनन्देन सहितम् इति सहर्षम् = आनन्दप्रफुल्लमित्यर्थः, जातमिति शेषः; ( अहम् = दुर्योधनः ), पाण्डवबले—पाण्डवानाम् = युधिष्ठिरादीनाम् बले = सैन्ये, वरवारणानाम्—वराः = श्रेष्ठाश्च ते वारणाः = हस्तिनः तेषाम्, गजराजानामित्यर्थः, मुखानि = आननानि, उत्कृत्तदन्तमुसलानि–उत्कृत्ताः = उत्पाटिताः दन्ताः = रदाः मुसलाः इव येषु तानि तादृशानि, उत्कृत्तरदानीत्यर्थः, कर्तुम् = विधातुम्, इच्छामि = वाञ्छामि। महान् मे अभिलाषः शत्रुभिः सह योद्धुमित्युत्साहः। अत्रोपमालङ्कारः। वसन्ततिलका वृत्तम्। तल्लक्षणम्—'उक्ता वसन्ततिलका तभजा जगौ गः' ॥ ४ ॥

**काञ्चुकीय इति**। महाराजशासनात्—महाराजस्य = स्वामिनः, दुर्योधनस्य इत्यर्थः, शासनात् = आदेशात्, सर्वराजमण्डलम्—सर्वम् = निखिलञ्च तत् राज्ञाम् = भूपतीनाम् मण्डलम् = समूहः ॥

**दुर्योधन इति**। सम्यक् = समीचीनम्। अवरोधनम् = अन्तःपुरम् ( 'भूभुजामन्तःपुरं स्यादवरोधनम्' इत्यमरः ) ॥

**दुर्योधन इति**। एकादशाक्षौहिणीबलसमुदयः–एकादशानाम् अक्षौहिणीनां बलस्य = सैन्यस्य समुदयः = समवायः। सेनापतिः = नियन्ता। अर्थः = विषयः। मन्त्रयित्वा = परस्परं विचार्य इत्यर्थः।

भवान् मन्त्रशालाम् । पितामह ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । मातुल ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । आर्यौ वैकर्णवर्षदेवौ ! प्रविशतां भवन्तौ । भो भोः सर्वक्षत्रियाः ! स्वैरं प्रविशन्तु भवन्तः । वयस्य ! कर्ण ! प्रविशामस्तावत् ।

( प्रविश्य )

आचार्य ! एतत् कूर्मासनम्, आस्यताम् । पितामह ! एतत् सिंहासनम्, आस्यताम् । मातुल ! एतच्चर्मासनम्, आस्यताम् । आर्यौ वैकर्णवर्षदेवौ ! आसातां भवन्तौ । भो भोः सर्वक्षत्रियाः ! स्वैरमासतां भवन्तः । किमिति किमिति महाराजो नास्त इति । अहो सेवाधर्मः । नन्वयमहमासे । वयस्य कर्ण ! त्वमप्यास्स्व । ( उपविश्य ) आर्यौ वैकर्णवर्षदेवौ ! उच्यताम्—अस्ति ममैकादशाक्षौहिणीबलसमुदयः । अस्य कः सेनापतिर्भवितुमर्हतीति । किमाहतुर्भवन्तौ—अत्रभवान् गान्धारराजो वक्ष्यतीति । भवतु, मातुलेनाभिधीयताम् । किमाह मातुलः—अत्रभवति गाङ्गेये स्थिते कोऽन्यः सेनापतिर्भवितुमर्हतीति । सम्यगाह मातुलः । भवतु भवतु, पितामह एव भवतु । वयमप्येतदभिलषामः ।

सेनानिनादपटहस्वनशङ्खनादै-
श्चण्डानिलाहतमहोदधिनादकल्पैः ।
गाङ्गेयमूर्ध्नि पतितैरभिषेकतोयैः
सार्धं पतन्तु हृदयानि नराधिपानाम् ॥ ५ ॥

( प्रविश्य )

---

**आचार्य इति** । स्वैरम्=शनैः । सेवाधर्मः=आधीन्यम् । गान्धारराजः—गान्धाराणां राजा=अधिपतिः गान्धारराजः, षष्ठीतत्पुरुषः, शकुनिरिति यावत् । गङ्गायाः=भागीरथ्याः अपत्यं पुमान् गाङ्गेयस्तस्मिन् गाङ्गेये=गङ्गापुत्रे भीष्मे ॥

**अन्वयः**—चण्डानिलाहतमहोदधिनादकल्पैः, सेनानिनादपटहस्वनशंखनादैः, गाङ्गेयमूर्ध्नि, पतितैः, अभिषेकतोयैः, सार्धम्, नराधिपानाम्, हृदयानि, पतन्तु ॥ ५ ॥

**शब्दार्थः**—चण्डानिलाहतमहोदधिनादकल्पैः=प्रचण्ड वायु से ताडित महासागर के गर्जन के सदृश, सेनानिनादपटहस्वनशंखनादैः=सेना के कोलाहल, नगाड़ा की गड़गड़ाहट तथा शंख की ध्वनि पूर्वक, गाङ्गेयमूर्ध्नि=भीष्म के मस्तक पर, पतितैः=गिरे हुये, अभिषेकतोयैः=अभिषेक के जल के, सार्धम्=साथ, नराधिपानाम्=( शत्रु ) राजाओं के, हृदयानि=हृदय, पतन्तु=गिरें ॥ ५ ॥

**सेनानिनादेति** । चण्डानिलेत्यादि—चण्डः=अतिभीषणः यः अनिलः=वायुः तेन आहतः=प्रताडितः यः महोदधिः=सागरः तस्य नादेन=घोषेण ईषत् ऊनैः इति, सेनानिनादेत्यादि—सेनायाः=बलस्य निनादः=कलकलः पटहानाम्=दुन्दुभीनाम् स्वनः=शब्दः शङ्खानां नादः=ध्वनिः इति तैः, सह गाङ्गेयमूर्ध्नि—गङ्गायाः अपत्यं पुमान् गाङ्गेयः=भीष्मः तस्य मूर्ध्नि=मस्तके, पतितैः=प्रक्षिप्तैः, प्रवाहितैरिति यावत्, अभिषेकतोयैः—अभिषेकस्य=

आप मन्त्र-शाला में प्रवेश करें। पितामह, अभिवादन कर रहा हूँ। आप मन्त्र-शाला में चलें। मामा, अभिवन्दन कर रहा हूँ। आप मन्त्र-शाला में प्रवेश करें। मान्य वैकर्ण एवं वर्षदेव, आप दोनों प्रवेश करें (मन्त्र-शाला में)। हे हे सभी क्षत्रियों, आप लोग धीरे-धीरे प्रवेश करें। मित्र कर्ण, अब (हम दोनों भी) प्रवेश करें।

**विशेष—एकादशाक्षौहिणी०**—२१८७० हाथी, २१८७० रथ, ६५६१० घोड़े तथा १०९३५० पैदल सेना को मिला कर एक अक्षौहिणी सेना बनती है।

**किमाहतुर्भवन्तौ**—रङ्ग-मञ्च पर जब एक ही व्यक्ति, आकाश की ओर देख कर, इस प्रकार प्रश्नोत्तर करता है मानों वह किसी सामने खड़े व्यक्ति से बात कर रहा हो तो उस वार्तालाप को "आकाश-भाषित" कहते हैं।

(प्रवेश करके)

आचार्य, यह कूर्मासन है, (इस पर आप) बैठें। पितामह, यह सिंहासन है, (आप) बैठें। मामा, यह चर्मासन है, बैठिये। पूज्य वैकर्ण तथा वर्षदेव, आप दोनों (भी) बैठें। हे हे सभी क्षत्रियों, आप सभी धीरे-धीरे बैठ जाँय। 'यह क्या, यह क्या, महाराज नहीं बैठ रहे हैं'—ऐसा (आप सभी कह रहे हैं)? धन्य है (आप लोगों का) सेवा-धर्म। अरे, (लो) यह मैं बैठ गया। मित्र कर्ण, तुम भी बैठ जाओ। (बैठ कर) मान्य वैकर्ण तथा वर्षदेवजी, बतलाइये—मेरी ग्यारह अक्षौहिणी सेना का समूह है। इसका कौन सेना-पति हो सकता है? क्या कहा आप दोनों ने—(इस विषय में) परमादरणीय गान्धारराज (शकुनि) बतलायेंगे। ठीक है, मामा (ही) कहें। क्या कहा मामाजी ने—'इन पूज्य गङ्गा-पुत्र (भीष्मपितामह) के रहते कौन दूसरा सेनापति होने के योग्य है।' उचित कहा मामाजी ने। हाँ हाँ, पितामह ही हों। हम लोग भी यही चाहते हैं।

(प्रचण्ड वायु से ताडित महासागर के गर्जन के सदृश, सेना के कोलाहल, नगाड़ा की गड़गड़ाहट तथा शंख की ध्वनि पूर्वक भीष्म के मस्तक पर गिरे हुये अभिषेक के जल के साथ (शत्रु) राजाओं के हृदय गिरें (अर्थात् भीष्म को सेना-पति के पद पर नियुक्त देख कर शत्रु-राजाओं का भय के मारे हृदय विदीर्ण होकर गिर जायगा)॥ ५॥)

(प्रवेश करके)

---

तीर्थादिपवित्रसलिलस्नानस्य, तोयैः = जलैः, सार्धम् = साकम्, नराधिपानाम् = भूपालानाम्, शत्रुपक्षावलम्बिनामित्यर्थः, हृदयानि = चेतांसि, पतन्तु = निपतन्तु। सैनापत्येऽभिषिक्तम् अद्वितीयं योद्धारं पितामहं दृष्ट्वा शत्रूणां चेतांसि हतोत्साहानि अतः स्फुटितानि भविष्यन्तीति भावः। पतन्तु = अस्मत्पक्षावलम्बिनां राज्ञां चेतांसि पितामहसमीपमागच्छन्त्वित्यपि यथाकथञ्चित्सङ्गतं स्यादिति। सहोक्तिरलङ्कारः। वसन्ततिलका छन्दः। तल्लक्षणम्—"उक्ता वसन्ततिलका तभजा जगौ गः" ॥ ५॥

**काञ्चुकीयः**—जयतु महाराजः। एष खलु पाण्डवस्कन्धावाराद् दौत्येनागतः पुरुषोत्तमो नारायणः।

**दुर्योधनः**—मा तावद् भो बादरायण!। किं किं कंसभृत्यो दामोदरस्तव पुरुषोत्तमः। स गोपालकस्तव पुरुषोत्तमः। बार्हद्रथापहृतविषयकीर्तिभोगस्तव पुरुषोत्तमः। अहो पार्थिवासन्नमाश्रितस्य भृत्यजनस्य समुदाचारः। सगर्वं खल्वस्य वचनम्। आः अपध्वंस।

**काञ्चुकीयः**—प्रसीदतु महाराजः। संभ्रमेण समुदाचारो विस्मृतः। ( पादयोः पतति। )

**दुर्योधनः**—संभ्रम इति। आः मनुष्याणामस्त्येव संभ्रमः। उत्तिष्ठोत्तिष्ठ।

**काञ्चुकीयः**—अनुगृहीतोऽस्मि।

**दुर्योधनः**—इदानीं प्रसन्नोऽस्मि। क एष दूतः प्राप्तः।

**काञ्चुकीयः**—दूतः प्राप्तः केशवः।

**दुर्योधनः**—केशव इति। एवमेष्टव्यम्। अयमेव समुदाचारः। भो भो राजानः! दौत्येनागतस्य केशवस्य किं युक्तम्। किमाहुर्भवन्तः। अर्घ्यप्रदानेन पूजयितव्यः केशव इति। न मे रोचते। ग्रहणमस्यात्र हितं पश्यामि।

ग्रहणमुपगते तु वासुभद्रे
हृतनयना इव पाण्डवा भवेयुः।

---

**काञ्चुकीय इति**। पाण्डवस्कन्धावारात्—पाण्डवानाम् = पाण्डुपुत्राणां युधिष्ठिरादीनाम् स्कन्धावारात् = शिबिरात्, दौत्येन = दूतभावेन, नारायणः = श्रीकृष्णः॥

**दुर्योधन इति**। कंसभृत्यः-कंसस्य भृत्यः = सेवकः, दामोदरः-दाम = रज्जुः उदरे = कटिभागे यस्य सः। कृष्णो बाल्ये चौर्येण नवनीतादिकं भुक्त्वा पात्राणि बभञ्ज। ततः मात्रा रज्ज्वा उलूखले बद्धः। अनेन तस्य कर्मणः अप्राशस्त्यं निर्दिष्टम्। गोपालकः—गाः पालयतीति गोपालः, स एव गोपालकः 'अल्पे' इति कप्रत्ययः। अनेन तस्य जन्मनः अप्राशस्त्यं सूचितम्। बार्हद्रथापहृतविषयकीर्तिभोगः—बृहद्रथस्य अपत्यं पुमान् बार्हद्रथः = जरासन्धः तेन अपहृतः = बलात् स्वाधीन्ये नीतः विषयस्य = राज्यस्य कीर्तेः = यशसः भोगः = आभोगः, विस्तार इति यावत्, यस्य सः। अनेन तस्य सामर्थ्यहीनता ध्वनिता। पार्थिवासन्नम्—पार्थिवस्य = राज्ञः आसन्नम् = पार्श्वभागम्, समुदाचारः = व्यवहारः। अपध्वंस = नीच ( अपध्वस्तः परित्यक्ते निन्दितेऽप्यवचूर्णिते' इति मेदिनी )॥

**काञ्चुकीय इति**। सम्भ्रमेण = त्वरया ( 'सम्भ्रमस्त्वरा' इत्यमरः ), समुदाचारः = योग्यो व्यवहारः॥



**अन्वयः**—वासुभद्रे, ग्रहणम्, उपगते, ( सति ), पाण्डवाः, हृतनयना, इव भवेयुः;

**काञ्चुकीय**—विजयी बनें महाराज। पाण्डवों के शिविर से पुरुष-श्रेष्ठ नारायण दूत के रूप में आये हैं।

**दुर्योधन**—अच्छा, बस बादरायण। क्या क्या? कंस का भृत्य दामोदर (ही) तुम्हारा पुरुषोत्तम (पुरुष-श्रेष्ठ) है? वह गायों का चरवाहा (ही) तुम्हारा पुरुषोत्तम है? बृहद्रथ के पुत्र (जरासन्ध) के द्वारा जिसके राज्य तथा यश का प्रसार हरण कर लिया गया है (अर्थात् जिसका राज्य छीन कर यश धूमिल कर दिया गया है) वही तुम्हारा पुरुषोत्तम है? राजा के सान्निध्य का आश्रयण करने वाले (अर्थात् राजा के पास में रहने वाले) सेवक-जन का आश्चर्यजनक (यह) व्यवहार है। इसकी वाणी गर्व से भरी हुई है। ओह! निन्दित (नीच)।

**विशेष**—कञ्चुकी ने 'पुरुषोत्तमो नारायणः' कह कर कृष्ण को सकल पुरुषों में श्रेष्ठतम बतलाकर उनकी महत्ता प्रतिपादित की है। दुर्योधन को कृष्ण का यह गौरव सह्य नहीं। अतः—दामोदरः, गोपालकः, तथा बार्हद्रथापहृतविषयकीर्तिभोगः—इन तीन विशेषणों के द्वारा कृष्ण का ओछापन सिद्ध करना चाहता है।

**दामोदरः**—कृष्ण ने शैशवावस्था में मक्खन खा कर मटकी फोड़ दी। यशोदा ने जब कृष्ण का यह कृत्य देखा तो उन्हें क्रोध आया। फलतः उन्होंने कृष्ण की कमर रस्सी में बाँध कर ओखली से बाँध दी ताकि कृष्ण अब चोरी न कर सकें। यह विशेषण कृष्ण की चरित्र-हीनता सूचित करता है।

**गोपालकः**—कृष्ण के लिये प्रयुक्त यह विशेषण उनके कुल की हीनता बतलाता है।

**बार्हद्रथापहृतविषयकीर्तिभोगः**—बृहद्रथ-पुत्र जरासन्ध मगध का राजा था। जब इसने सुना कि कृष्ण ने मेरे जामाता कंस को मार डाला है तो इसने विशाल सेना लेकर १८ बार मथुरा को घेरा। कंस के राज्य का पर्याप्त भू-भाग अपने अधीन कर लिया। इसी बात की ओर यहाँ सङ्केत है।

**काञ्चुकीयः**—प्रसन्न हों महाराज (अर्थात् महाराज क्षमा करें)। जल्दबाजी के कारण शिष्ट व्यवहार भूल गया था। (पैरों पर पड़ता है)।

**दुर्योधन**—जल्दबाजी? आह! मानवों में जल्दबाजी (घबराहट) होती ही है। उठो, उठो।

**काञ्चुकीय**—अनुगृहीत हूँ।

**दुर्योधन**—अब (तुम्हारे ऊपर) प्रसन्न हूँ। कौन यह दूत आया है?

**काञ्चुकीय**—केशव (नामक) दूत आया है।

**दुर्योधन**—केशव ऐसा (कहा। विना विशेषण आदि के) यही योग्य (परिचय) है। यही योग्य व्यवहार है। हे हे राजाओं, दूत के रूप में आये हुये केशव के लिये कैसा (व्यवहार) उचित है? क्या कहा आप लोगों ने—'अर्घ्य देकर केशव की पूजा करनी चाहिये।' (यह सलाह) मुझे नहीं रुच रही है। यहां इसको कैद करना (ही मैं) कल्याणकारक समझता हूँ।

कृष्ण के बन्धन को प्राप्त होने पर (अर्थात् कृष्ण के बन्धन में आ जाने पर) पाण्डव लोग निकाली हुई है आँखें जिनकी ऐसे से (अर्थात् अन्धे से) हो जायेंगे।

गतिमतिरहितेषु पाण्डवेषु
क्षितिरखिलापि भवेन्ममासपत्ना ॥ ६ ॥

अपि च योऽत्र केशवस्य प्रत्युत्थास्यति, स मया द्वादशसुवर्णभारेण दण्ड्यः । तदप्रमत्ता भवन्तु भवन्तः । को नु खलु ममाप्रत्युत्थानस्योपायः । हन्त दृष्ट उपायः । बादरायण ! आनीयतां स चित्रपटो ननु, यत्र द्रौपदीकेशाम्बराकर्षणमालिखितम् । ( अपवार्य ) तस्मिन् दृष्टिविन्यासं कुर्वन् नोत्थास्यामि केशवस्य ।

**काञ्चुकीयः**—यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) जयतु महाराजः । अयं स चित्रपटः ।

**दुर्योधनः**—ममाग्रतः प्रसारय ।

**काञ्चुकीयः**—यदाज्ञापयति महाराजः । ( प्रसारयति । )

**दुर्योधनः**—अहो दर्शनीयोऽयं चित्रपटः । एष दुःशासनो द्रौपदीं केशहस्ते गृहीतवान् । एषा खलु द्रौपदी,

दुःशासनपरामृष्टा सम्भ्रमोत्फुल्ललोचना ।
राहुवक्त्रान्तरगता चन्द्रलेखेव शोभते ॥ ७ ॥

---

पाण्डवेषु, गतिमतिरहितेषु ( सत्सु ), अखिला, अपि, क्षितिः, मम, असपत्ना, भवेत् ॥ ६ ॥

**शब्दार्थः**—वासुभद्रे = कृष्ण के, ग्रहणम् = बन्धन को, उपगते = प्राप्त होने, ( सति = पर ), पाण्डवाः = पाण्डवलोग, हतनयनाः = निकाल ली गई हैं आँखें जिनकी ऐसे, इव = से, भवेयुः = हो जायेंगे; पाण्डवेषु = पाण्डवों के, गतिमतिरहितेषु ( सत्सु ) = सहायक तथा विचारने की शक्ति से रहित हो जाने पर, अखिला = समूची, अपि = ही, क्षितिः = पृथिवी मम = मेरे लिये, असपत्ना = शत्रु-रहित, भवेत् = हो जायगी ॥ ६ ॥

**ग्रहणमिति** । वासुभद्रे = श्रीकृष्णे, "नामैकदेशेन सर्वनामग्रहणम्" इत्युक्तेः वासुपदं वासुदेवपदबोधकमिति, ग्रहणम् = मया कृतं बन्धनम्, उपगते = प्राप्ते, ( सति ), पाण्डवाः = युधिष्ठिरादयः, हतनयनाः—हतानि = बलान्निःसारितानि नयनानि = नेत्राणि येषां ते तादृशाः, इव = यथा, भवेयुः = स्युः; अन्धाः इव भवेयुः; पाण्डवेषु = पाण्डुपुत्रेषु, गतिमतिरहितेषु—गतिश्च = सहायकश्च मतिश्च = विवेकशक्तिश्चेति तयोः रहिताः = वञ्चिताः तादृशेषु सत्सु, अखिला = समग्रा, अपि = एव, क्षितिः = पृथिवी, मम = मम दुर्योधनस्य, मत्कृते इत्यर्थः, असपत्ना = शत्रुरहिता, भवेत् = स्यात् । वन्दीभूते कृष्णे भू-मण्डलमेव मत्कृते निःसपत्नं भवेदिति भावः । पुष्पिताग्रा छन्दः । लक्षणम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' ॥६॥

**अपि चेति** । प्रत्युत्थास्यति = प्रत्युत्थानं विधास्यति, आदरार्थमिति शेषः, द्वादशसुवर्णभारेण—सुवर्णः = कर्षः, द्वादशकर्षात्मको नाणकविशेषः द्वादशसुवर्णः इति व्यपदिष्टः । द्वादशसुवर्णानां भारः पलसहस्रद्रव्यं द्वादशसुवर्णभारः तेन, ( 'भारः सहस्रद्वितये पलानां च गरिम्णि च' इति यादवः ) । भारशब्देन मुद्रा वात्र व्यपदिष्टा । दण्ड्यः—दण्डितुं योग्यः दण्ड्यः = दण्डनीयः । अप्रमत्ताः = सावधानाः । हन्तेति हर्षेऽव्ययम् । द्रौपदीकेशाम्बराकर्षणम्—द्रौपद्याः = द्रुपदसुतायाः, केशाम्बरयोः = कचवस्त्रयोः, आकर्षणम् = दुःशासनेन बलादपहरणम् । दृष्टिविन्यासम्—दृष्ट्योः = नेत्रयोः विन्यासम् = स्थापनम् ॥

पाण्डवों के सहायक तथा विचारने की शक्ति से रहित हो जाने पर समूची ही पृथिवी मेरे लिये शत्रु-रहित हो जायगी ॥ ६ ॥

और भी, जो यहाँ केशव के (आने पर उनके सम्मानार्थ) उठेगा, वह मेरे द्वारा बारह (मुद्रा) सुवर्ण के भार से (अर्थात् बारह तोले भर सोने से) दण्डित किया जायगा। तो आप लोग सावधान हो जायँ। अच्छा, मेरे न उठने का क्या उपाय (हो सकता) है ? वाह ! सूझ गया उपाय। बादरायण, अच्छा, वह चित्रपट ले आओ जिसमें द्रौपदी के केश एवं वस्त्र का खींचना चित्रित किया गया है। (दूसरी ओर मुँह करके) उस पर आँखों को लगाये हुये (मैं) कृष्ण के लिये नहीं उठूँगा।

**काञ्चुकीय**—महाराज की जैसी आज्ञा। (निकल कर, प्रवेश करके) विजयी बनें महाराज। यह वह चित्रपट है।

**दुर्योधन**—मेरे सामने फैलाओ (उसे)।

**काञ्चुकीय**—जैसी महाराज की आज्ञा। (फैलता है)।

**दुर्योधन**—वाह ! देखने के योग्य है चित्रपट। यह दुःशासन ने द्रौपदी के सुन्दर केश-कलाप को पकड़ा है। यह द्रौपदी तो—

दुश्शासन के द्वारा अपमानित (अतः), घबराहट के कारण फैली हुई आँखों वाली (द्रौपदी); राहु के मुख के मध्य में वर्तमान चन्द्रमा की कला की तरह; सुशोभित हो रही है ॥ ७ ॥

---

**दुर्योधन इति।** दर्शनीयः = अवलोकनीयः। केशहस्ते = प्रशस्ते केशकलापे। 'पाशः पक्षश्च हस्तश्च प्रशंसार्थाः कचात्परे' इति वचनात् केशानां प्रशस्तत्वं ज्ञेयमिति ॥

**अन्वयः**—(एषा, खलु,) दुश्शासनपरामृष्टा, सम्भ्रमोत्फुल्ललोचना, (द्रौपदी); राहु-वक्त्रान्तरगता, चन्द्रलेखा, इव, शोभते ॥ ७ ॥

**शब्दार्थः**—(एषा = यह, खलु = तो), दुश्शासनपरामृष्टा = दुश्शासन के द्वारा अपमानित, सम्भ्रमोत्फुल्ललोचना = घबराहट के कारण फैली हुई आँखों वाली, (द्रौपदी = द्रुपदसुता); राहुवक्त्रान्तरगता = राहु के मुख के मध्य में वर्तमान, चन्द्रलेखा = चन्द्रमा की कला की, इव = तरह; शोभते = सुशोभित हो रही है ॥ ७ ॥

**दुःशासनपरामृष्टेति।** (एषा = इयम्, खलु), दुःशासनपरामृष्टा—दुःशासनेन = ममानुजेन दुःशासनेनेत्यर्थः परामृष्टा = अवस्कन्दिता, अपमानितेति यावत्, सम्भ्रमोत्फुल्ल-लोचना—सम्भ्रमेण = व्याकुलतयेत्यर्थः उत्फुल्ले = विकसिते, विस्फारिते इति यावत्, लोचने = नेत्रे यस्याः सा, द्रौपदीति गद्यभागादध्याहार्यम्, राहुवक्त्रान्तरगता—राहोः = सैंहिकेयस्य, सैंहिकेयो राहुरिति, वक्त्रस्य = आननस्य अन्तरे = मध्ये गता = अवस्थिता, चन्द्रलेखा—चन्द्रस्य = शशिनः लेखा = कला, इव = यथा, शोभते = राजते। अत्रोपमालङ्कारः। अनुष्टुप्

एष दुरात्मा भीमः सर्वराजसमक्षमवमानितां द्रौपदीं दृष्ट्वा प्रवृद्धामर्षः सभास्तम्भं तुलयति। एष युधिष्ठिरः,

सत्यधर्मघृणायुक्तो द्यूतविभ्रष्टचेतनः।
करोत्यपाङ्गविक्षेपैः शान्तामर्षं वृकोदरम् ॥ ८ ॥

एष इदानीमर्जुनः,

रोषाकुलाक्षः स्फुरिताधरोष्ठ—
स्तृणाय मत्वा रिपुमण्डलं तत्।
उत्सादयिष्यन्निव सर्वराज्ञः
शनैः समाकर्षति गाण्डिवज्याम् ॥ ९ ॥

एष युधिष्ठिरोऽर्जुनं निवारयति। एतौ नकुलसहदेवौ,

कृतपरिकरबन्धौ चर्मनिस्त्रिंशहस्तौ
परुषितमुखरागौ स्पष्टदष्टाधरोष्ठौ।

---

छन्दः। छन्दलक्षणम्—'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्। द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥ ७ ॥

**एष इति।** दुरात्मा=दुष्टः, सर्वराजसमक्षम्–सर्वेषां राज्ञाम्=भूपालानाम् समक्षम्=पुरः, प्रवृद्धामर्षः–प्रवृद्धः=प्रज्वलितः अमर्षः=कोपः यस्य सः ॥

**अन्वयः**—सत्य-धर्म-घृणा-युक्तः, द्यूतविभ्रष्टचेतनः, ( एषः, युधिष्ठिरः ), अपाङ्गविक्षेपैः, वृकोदरम्, शान्तामर्षम्, करोति ॥ ८ ॥

**शब्दार्थः**—सत्य—धर्म—घृणा—युक्तः=सत्य, धर्म तथा दया ( अथवा अनुचित कार्य को छिपाने के दृढ़ आग्रह ) से युक्त, द्यूतविभ्रष्टचेतनः=जूए ( में हार जाने ) से विगत चेतनावाले ( हत-प्रभ ), ( एषः=यह, युधिष्ठिरः=धर्मराज ), अपाङ्गविक्षेपैः=आँखों के किनारे वाले भाग को गिरा कर ( अर्थात् आँख मार कर, आँखों के इशारों से ), वृकोदरम्=भीम को, शान्तामर्षम्=शान्तक्रोध वाला, करोति=बना रहा है ॥ ८ ॥

दुर्योधनो युधिष्ठिरं विशिनष्टि—**सत्येति** । सत्य-धर्म-घृणा-युक्तः—सत्यञ्च=अनृतञ्च धर्मश्च=श्रुति-स्मृतिचोदितं कर्तव्यञ्च घृणा च=दया च वा अकार्यविषया जुगुप्सा च, ताभिः युक्तः=अन्वितः, द्यूतविभ्रष्टचेतनः–द्यूतेन=कैतवेन, वस्तुतः द्यूते पराजयेन, विभ्रष्टा=विगता चेतना=चैतन्यम्, विवेचनाशक्तिरिति भावः, यस्य तादृशः, 'एष युधिष्ठिरः' इति गद्यादध्याहार्यम्, अपाङ्गविक्षेपैः—अपाङ्गयोः=नेत्रप्रान्तभागयोः विक्षेपैः=सञ्चालनैः, वृकोदरम्=भीमम्, शान्तामर्षम्—शान्तः=दूरीभूतः अमर्षः=कोपः यस्य स तादृशम्, करोति=विदधाति । अनुष्टुप् छन्दः ॥ ८ ॥

यह दुष्ट भीम समस्त राजाओं के समक्ष द्रौपदी को अपमानित देखकर क्रोध से लाल होकर सभा के खम्भे को ( उखाड़ने के लिये ) आजमा रहा है।

सत्य, धर्म तथा दया ( अथवा अनुचित कार्य को छिपाने के दृढ़ आग्रह ) से युक्त, जूए ( में हार जाने ) से विगत चेतना वाले ( अर्थात् हत-प्रभ, यह युधिष्ठिर ) आँखों के किनारे वाले भाग को गिरा कर ( अर्थात् आँख मार कर, आँखों के इशारों से ) भीम को शान्त क्रोधवाला बना रहा है ( अर्थात् भीम को शान्त कर रहा है ) ॥ ८ ॥

कोप से तमतमाई आँखों वाला, फड़कते अधरोष्ठ वाला, ( अब यह अर्जुन ) उस शत्रु-समूह को तिनके के समान समझ कर, सभी राजाओं को विनष्ट करता हुआ-सा ( अपने धनुष ) गाण्डीव की प्रत्यञ्चा को धीरे-धीरे खींच रहा है ॥ ९ ॥

यह युधिष्ठिर अर्जुन को रोक रहा है।

कमर कसे हुये, ढाल तलवार हाथ में लिये हुये, कठोर मुख की लालिमावाले, ( अत्यन्त-

---

**अन्वयः**—रोषाकुलाक्षः, स्फुरिताधरोष्ठः, ( इदानीम् , एषः, अर्जुनः ) तत्, रिपुमण्डलम्, तृणाय, मत्वा, सर्वराज्ञः, उत्सादयिष्यन् , इव, गाण्डिवज्याम् , शनैः, समाकर्षति ॥ ९ ॥

**शब्दार्थः**—रोषाकुलाक्षः = कोप से तमतमाई आँखोंवाला, स्फुरिताधरोष्ठः = फड़कते अधरोष्ठवाला ( इदानीम् = अब, एषः = यह, अर्जुनः = धनञ्जय ), तत् = उस, रिपुमण्डलम् = शत्रु समूह को, तृणाय = तिनके के समान, मत्वा = समझ कर, सर्वराज्ञः = सभी राजाओं को, उत्सादयिष्यन् = विनष्ट करता हुआ, इव = सा, गाण्डीवज्याम् = गाण्डीव की प्रत्यञ्चा को, शनैः = धीरे-धीरे, समाकर्षति = खींच रहा है ॥ ९ ॥

अत्र श्लोकेऽर्जुनमवसरप्राप्तं वर्णयति—**रोषाकुलाक्ष इति**। रोषाकुलाक्षः—रोषेण = कोपेन आकुले = विह्वले अक्षिणी = नेत्रे यस्य तादृशः, स्फुरिताधरोष्ठः—स्फुरितः = कम्पमानः अधरोष्ठः = अधरः यस्य तादृशः, इदानीम् = सम्प्रति, एषः = अयम् , अर्जुनः = धनञ्जयः, पदत्रयमिदं गद्य-भागादध्याहार्यम् , तत् = तदानीं तत्र वर्तमानम् , रिपुमण्डलम् = शत्रुसमूहम् , तृणाय मत्वा = तृणमिव अनादृत्य, अकिञ्चित्करमिति मत्वा, 'मन्यकर्मण्यनादरे' इति चतुर्थी, सर्वराज्ञः—सर्वे = निखिलाश्च ते राजानः = भूपालास्तान् , 'राजाहःसखिभ्यष्टच्' इत्यनेन समासान्तष्टच् यदा न भवेत्तदैतत् सिद्धं स्यादिति,उत्सादयिष्यन् = विनाशयिष्यन् , इव = यथा, गाण्डिवज्याम्—गाण्डीवस्य = स्वधनुषः ज्याम् = प्रत्यञ्चाम् , शनैः = शनकैः, समाकर्षति = आरोपयति । अर्जुनो योद्धुमुद्यत इवाऽऽस्ते। अत्रोत्प्रेक्षालङ्कारः। उपजातिश्छन्दः। तल्लक्षणम्—'स्यादिन्द्रवज्रा यदि तौ जगौ गः। उपेन्द्रवज्रा प्रथमे लघौ सा ॥ अनन्तरोदीरितलक्ष्मभाजौ, पादौ यदीयावुपजात-यस्ताः ॥ ९ ॥

**अन्वयः**—कृतपरिकरबन्धौ, चर्मनिस्त्रिंशहस्तौ, [illegible] ,

विगतमरणशङ्कौ सत्वरं भ्रातरं मे
हरिमिव मृगपोतौ तेजसाभिप्रयातौ ॥ १० ॥

एष युधिष्ठिरः कुमारावुपेत्य निवारयति—

नीचोऽहमेव विपरीतमतिः कथं वा
रोषं परित्यजतमद्य नयानयज्ञौ ।
द्यूताधिकारमवमानममृष्यमाणाः
सत्त्वाधिकेषु वचनीयपराक्रमाः स्युः ॥ ११ ॥

इति । एष गान्धारराजः,

अक्षान् क्षिपन् स कितवः प्रहसन् सगर्वं
सङ्कोचयन्निव मुदं द्विषतां स्वकीर्त्या ।

---

विगतमरणशङ्कौ, ( एतौ, नकुलसहदेवौ ), मृगपोतौ, हरिम् , इव, मे, भ्रातरम् , सत्वरम्, तेजसा, अभिप्रयातौ ॥ १० ॥

**शब्दार्थः**—कृतपरिकरबन्धौ = कमर कसे हुये, चर्मनिस्त्रिंशहस्तौ = ढाल-तलवार हाथ में लिये हुये, परुषितमुखरागौ = कठोर मुख की लालिमावाले, स्पष्टदष्टाधरोष्ठौ–स्पष्टतः अधरोष्ठ को काटनेवाले, विगतमरणशङ्कौ–मृत्यु के भय से रहित, ( एतौ = ये, नकुलसहदेवौ = नकुल और सहदेव ), मृगपोतौ = हरिण के दो शावक, हरिम् = सिंह के ऊपर, इव = जैसे, ( टूटते हैं वैसे ही ), मे = मेरे, भ्रातरम् = भाई के ऊपर, सत्वरम् = अतिशीघ्र, तेजसा = वेग से, अभिप्रयातौ = झपट पड़े हैं ॥ १० ॥

नकुलसहदेवौ वर्णयति—**कृतपरिकरेति** । कृतपरिकरबन्धौ—कृतः = सम्पादितः परिकरस्य = कटिभागस्य बन्धः = बन्धनं याभ्यां तौ, चर्मनिस्त्रिंशहस्तौ—चर्म = फलकम् ( 'फलकोऽस्त्री फलं चर्म' इत्यमरः ), लोके 'ढाल' इति ख्यातम् , निस्त्रिंशः = खड्गश्चेति चर्मनिस्त्रिंशौ, तौ हस्ते = करे ययोस्तौ, स्पष्टदष्टाधरोष्ठौ—स्पष्टं यथा तथा दष्टः = चर्वितः अधरोष्ठः = निम्नोष्ठः याभ्यां तौ, विगतमरणशङ्कौ—विगता = दूरीभूता मरणस्य = मृत्योः शङ्का = भीतिः ययोस्तौ, 'एतौ नकुलसहदेवौ' इति गद्याद्योज्यम्; मृगपोतौ–मृगस्य = हरिणस्य पोतौ = शावकौ ( 'पोतः···शावकः शिशुः' इत्यमरः ), हरिम् इव = सिंहं यथा; मे = मम, भ्रातरम् = अनुजं दुःशासनम् , सत्वरम् = अतिशीघ्रम् , तेजसा = वेगेन, अभिप्रयातौ = आक्रमितुं चलितौ । अत्रोपमाऽलङ्कारः । मालिनी छन्दः । छन्दोलक्षणम्—'ननमयययुतेयं मालिनी भोगिलोकैः' ॥ १० ॥

**अन्वयः**—कथं वा, नीचः, अहम् , एव, विपरीतमतिः, ( अस्मि ), नयानयज्ञौ, (युवाम् ), अद्य, रोषम् , परित्यजतम् , सत्त्वाधिकेषु, द्यूताधिकारम् , अवमानम् , अमृष्यमाणाः, वचनीयपराक्रमाः, स्युः ॥ ११ ॥

**शब्दार्थः**—कथं वा = भले ही, नीचः = नीच, अहम् = मैं, एव = ही, विपरीतमतिः = उल्टी बुद्धिवाला, ( अस्मि = हूँ ), नयानयज्ञौ = उचित एवं अनुचित के विशेषज्ञ, ( युवाम् =

क्रोध के मारे ) स्पष्टतः अधरोष्ठ को काटनेवाले, मृत्यु के भय से रहित, ( ये नकुल और सहदेव ), हरिण के दो शावक सिंह के ऊपर जैसे ( टूटते हैं वैसे ही ) मेरे भाई ( दुःशासन ) के ऊपर अतिशीघ्र वेग से झपट पड़े हैं ॥ १० ॥

**विशेष—स्पष्टदृष्टाधरोष्ठौ**—व्यक्ति जब क्रोध के मारे पागल हो उठता है, उस समय वह अपने ओठ को काटने लगता है अथवा दाँतों से कस कर दबा लेता है। इस विशेषण से नकुल और सहदेव के क्रोध की पराकाष्ठा बतलाई गई है ॥ १० ॥

यह युधिष्ठिर ( इन दोनों ) कुमारों के पास जाकर ( उन्हें आक्रमण करने से ) रोक रहा है—

भले ही, नीच मैं ही उलटी बुद्धिवाला ( हूँ ) । ( किन्तु ) उचित एवं अनुचित के विशेषज्ञ ( आप दोनों ) आज क्रोध को छोड़ दीजिये। ( अपने से ) विशिष्ट शत्रुओं के ऊपर, जुआ के द्वारा उपस्थित किये गये अपमान को न बर्दास्त करते हुये ( व्यक्ति ) निन्दनीय पराक्रम वाले होते हैं ॥ ११ ॥

**विशेष—वचनीयपराक्रमाः**—जुआ में हारा हुआ व्यक्ति यदि जीतनेवाले के ऊपर पराक्रम का प्रदर्शन करता है, तो लोक में उसकी प्रशंसा न होकर निन्दा ही होती है ॥ ११ ॥

पाशों को फेकता हुआ, अभिमान के साथ हँसता हुआ, अपनी कीर्ति से

---

आप दोनों ), अद्य = आज, रोषम् = क्रोध को, परित्यजतम् = छोड़ दीजिये, सत्वाधिकेषु = ( अपने से ) विशिष्ट शत्रुओं के ऊपर, द्यूताधिकारम् = जुआ के द्वारा उपस्थित किये गये, अवमानम् = अपमान को, अमृष्यमाणाः = न बर्दास्त करते हुये ( व्यक्ति ), वचनीयपराक्रमाः = निन्दनीय पराक्रमवाले, स्युः = होते हैं ११ ॥

**नीचोऽहमिति** । कथं वा = कथमपीत्यर्थः, नीचः = निकृष्टः, अहम् = द्यूते पराजितो युधिष्ठिर इत्यर्थः, एव = च, विपरीतमतिः-विपरीता = विपर्यस्ता, दूषितेति यावत्, मतिः = बुद्धिः यस्य तादृशः, अस्मीति क्रियाशेषः; किन्तु नयानयज्ञौ-नयश्च = नीतिश्च अनयश्च = अनीतिश्च = नयानयौ तौ जानीते अमू इति तादृशौ, उचिताऽनुचितविशेषज्ञाविति भावः, युवामित्यध्याहार्यम्, अद्य = सम्प्रति, रोषम् = क्रोधम्, पत्यिजतम् = परिजहीतम्; कुत इत्याह-सत्त्वाधिकेषु-सत्त्वेषु = उत्कर्षेषु, बलबुद्ध्यादिष्वित्यर्थः अधिकाः = विशिष्टाः तेषु, विजयशालिषु शत्रुष्वित्यर्थः, द्यूताधिकारम्-द्यूतेन = अक्षक्रीडया अधिक्रियते = प्रस्तूयेत इति द्यूताधिकारम् = द्यूतनिमित्तकमित्यर्थः, अवमानम् = अपमानम्, अमृष्यमाणाः = असहमानाः, जनाः इति शेषः, वचनीयपराक्रमाः-वचनीयः = निन्दनीयः पराक्रमः = शौर्यप्रदर्शनम् येषां तादृशाः, स्युः = भवेयुः, भवन्तीत्यर्थः । वसन्ततिलका छन्दः । तल्लक्षणम्-'उक्ता वसन्ततिलका तभजा जगौ गः ।।' ११ ॥

**अन्वयः**—अक्षान्, क्षिपन्, सगर्वम्, सहसा, स्वकीर्त्या, विमलम्, पृष्ठम्,

**स्वैरासनो द्रुपदराजसुतां रुदन्तीं**
**काक्षेण पश्यति लिखत्यभिखं नयज्ञः ॥ १२ ॥**

एतावाचार्यपितामहौ तां दृष्ट्वा लज्जायमानौ पटान्तान्तर्हितमुखौ स्थितौ। अहो अस्य वर्णाढ्यता। अहो भावोपपन्नता। अहो युक्तलेखता। सुव्यक्तमालिखितोऽयं चित्रपटः। प्रीतोऽस्मि। कोऽत्र।

**काञ्चुकीयः**—जयतु महाराजः।

**दुर्योधनः**—बादरायण ! आनीयतां स विहगवाहनमात्रविस्मितो दूतः।

**काञ्चुकीयः**—यदाज्ञापयति महाराजः। ( निष्क्रान्तः। )

**दुर्योधनः**—वयस्य कर्ण !

**प्राप्तः किलाद्य वचनादिह पाण्डवानां**
**दौत्येन भृत्य इव कृष्णमतिः स कृष्णः।**
**श्रोतुं सखे ! त्वमपि सज्जय कर्ण ! कर्णौ**
**नारीमृदूनि वचनानि युधिष्ठिरस्य ॥ १३ ॥**

---

सङ्कोचयन्, इव, स्वैरासनः, नयज्ञः, कितवः, सः, रुदन्तीम्, द्रुपदराजसुताम्, काक्षेण, पश्यति, ( तथा ), अभिखम्, लिखति ॥ १२ ॥

**शब्दार्थः**—अक्षान्=पाशों को, क्षिपन्=फेंकता हुआ, सगर्वम्=अभिमान के साथ, प्रहसन्=हँसता हुआ, स्वकीर्त्या=अपनी कीर्ति से, द्विषताम्=शत्रुओं की, मुदम्=प्रसन्नता को, सङ्कोचयन्=सङ्कुचित करता हुआ, इव=सा, स्वैरासनः=आराम से आसन पर विराजमान, नयज्ञः=नीतिज्ञ, कितवः=धूर्त, सः=वह ( शकुनि ), रुदन्तीम्=रोती हुई, द्रुपदराजसुताम्=द्रौपदी को, काक्षेण=कनखी से, पश्यति=देख रहा है, ( तथा=और ), अभिखम्=सामने के आकाश में, लिखति=लिख ( सा ) रहा है ॥ १२ ॥

**अक्षानिति**। अक्षान्=द्यूतपाशान्, क्षिपन्=प्रक्षिपन्, प्रसारयन्नित्यर्थः, सगर्वम्=साभिमानम्, प्रहसन्=हास्यं कुर्वन्; स्वकीर्त्या=निजयशसा, द्यूतचातुर्ये निजयशसेत्यर्थः, द्विषताम्=शत्रूणाम्, युधिष्ठिरादीनामिति भावः, मुदम्=हर्षम्, सङ्कोचयन्=स्वल्पीकुर्वन्, इव=यथा, स्वैरासनः—स्वैरम्=स्वेच्छम् आसनम्=उपवेशनम् यस्य तादृशः, नयज्ञः=नीतिज्ञः द्यूतनयाभिज्ञ इत्यर्थः, कितवः=धूर्तः, सः=मम मातुलः, शकुनिरित्यर्थः, रुदन्तीम्=विलपन्तीम्, द्रुपदराजसुताम्=द्रुपदपुत्रीं द्रौपदीम्, काक्षेण=अक्षिकोणेन, अक्षमिन्द्रियं तच्च प्रकृते अक्षिरूपम्। ईषदक्षं काक्षम्। 'ईषदर्थे' पा० ६।३।१०५ इति कोः कादेशः। पश्यति=अवलोकयति, तथा, अभिखम्=सम्मुखस्थमाकाशमित्यर्थः, लिखति=उट्टङ्कयति, आकाशे दृष्टिं स्थाप्य स्वाभिप्रायं निश्चिनोतीवेति भावः। अत्रोत्प्रेक्षालङ्कारः। वसन्ततिलका छन्दः ॥ १२ ॥

**एताविति**। ताम्=द्रौपदीमित्यर्थः, पटान्तान्तर्हितमुखौ–पटस्य=वस्त्रस्य अन्तेन=अञ्चलेन अन्तर्हिते=आच्छादिते मुखे ययोः तादृशौ। अहो इत्याश्चर्यद्योतकमव्ययपदम्, वर्णाढ्यता–वर्णानाम्

शत्रुओं की प्रसन्नता को सङ्कुचित करता हुआ-सा, आराम से आसन पर विराजमान, नीतिज्ञ, धूर्त वह ( शकुनि ) रोती हुई द्रौपदी को कनखी से देख रहा है ( और ) सामने के आकाश में ( कुछ ) लिख ( -सा ) रहा है ॥ १२ ॥

**विशेष—लिखत्यभिखम्**—व्यक्ति सोच-सोच कर तथा समझ-समझ कर जब कोई कार्य करता है तो वह आकाश में टकटकी लगा कर कुछ देर देखता है। शकुनि भी ऐसा ही कुछ कर रहा है। अतः दुर्योधन कहता है कि मानो वह सामने के आकाश में लिख रहा है ॥१२॥

ये आचार्य द्रोण तथा भीष्म पितामह उस ( द्रौपदी ) को देखकर लज्जित होते हुए वस्त्र के आँचल में मुख को छिपाये हुए स्थित हैं। इस ( चित्रपट ) के रंगों की सम्पन्नता आश्चर्यजनक है। भावों की अभिव्यक्ति ( भी ) अद्भुत है। ( चित्र को ) ठीक ढंग से अङ्कित करना ( भी ) विस्मयकारक है। यह चित्रपट खूब सुस्पष्ट चित्रित किया गया है। (मैं इसे देख कर) प्रसन्न हो गया हूँ। कौन ( है ) यहाँ ?

**काञ्चुकीय**—महाराज विजयी बनें।

**दुर्योधन**—बादरायण, पक्षी पर सवारी करने मात्र से गर्वीले उस दूत ( कृष्ण ) को लिवा आओ।

**काञ्चुकीय**—जैसी आज्ञा दे रहे हैं महाराज अर्थात् महाराज की जैसी आज्ञा। ( निकल गया )

**दुर्योधन**—मित्र कर्ण।

आज कालीबुद्धिवाला वह (धूर्त) कृष्ण पाण्डवों के कहने से दूत के रूप में, सेवक की तरह, यहाँ ( राजदरबार में ) आया है—ऐसी सम्भवना है। मित्र कर्ण, तुम भी युधिष्ठिर के, अबला के ( वचनों की तरह ) सुकोमल वचनों को सुनने के लिये ( अपने ) कानों को तत्पर रक्खो ॥ १३ ॥

---

=रञ्जकद्रव्याणाम् आढ्यता=सम्पन्नता, सम्यग्युक्तिरिति यावत्। भावोपपन्नता-भावानाम्=मनःसंवेगानाम् उपपन्नता=यथार्थाभिव्यक्तिरिति यावत् ॥

**दुर्योधन इति**। विहगवाहनमात्रविस्मितः—विहगः=पक्षी, गरुड इति यावत्, वाहनम्=गमनसाधनम् यस्य तादृशः, स एव विहगवाहनमात्रम्, अत्रावधारणे मात्रच् प्रत्ययः तेन विस्मितः=गर्वितः, दूतः=सन्देशहरः, कृष्ण इति यावत् ॥

**अन्वयः**—अद्य, कृष्णमतिः, सः, कृष्णः, पाण्डवानाम्, वचनात्, दौत्येन, भृत्यः, इव, इह, प्राप्तः, किल, (अतः) हे सखे, कर्ण, त्वम्, अपि, युधिष्ठिरस्य, नारीमृदूनि, वचनानि, श्रोतुम्, कर्णौ, सज्जय ॥ १३ ॥

**शब्दार्थः**—अद्य=आज, कृष्णमतिः=काली बुद्धिवाला, सः=वह ( धूर्त ), कृष्णः=कृष्ण, पाण्डवानाम्=पाण्डवों के, वचनात्=कहने से, दौत्येन=दूत के रूप में, भृत्यः=सेवक की, इव=तरह, इह=यहाँ ( राजदरबार में ), प्राप्तः=आया है, किल=ऐसी सम्भावना

( ततः प्रविशति वासुदेवः काञ्चुकीयश्च । )

**वासुदेवः**—अथ खलु धर्मराजवचनाद् धनञ्जयाकृत्रिममित्रतया चाहवदर्पमनुक्तग्राहिणं सुयोधनं प्रति मयाप्यनुचितदौत्यसमयोऽनुष्ठितः । अथ च,

**कृष्णापराभवभुवा रिपुवाहिनीभ—**
**कुम्भस्थलीदलनतीक्ष्णगदाधरस्य ।**
**भीमस्य कोपशिखिना युधि पार्थपत्त्रि—**
**चण्डानिलैश्च कुरुवंशवनं विनष्टम् ॥ १४ ॥**

इदं सुयोधनशिबिरम् । इह हि,

**आवासाः पार्थिवानां सुरपुरसदृशाः स्वच्छन्दविहिता**
**विस्तीर्णाः शस्त्रशाला बहुविधकरणैः शस्त्रैरुपरचिताः ।**
**हेषन्ते मन्दुरास्थास्तुरगवरघटा बृंहन्ति करिण**
**ऐश्वर्यं स्फीतमेतत् स्वजनपरिभवादासन्नविलयम् ॥ १५ ॥**

---

है; ( अतः = इसलिये ), हे सखे कर्ण = हे मित्र कर्ण, त्वम् = तुम, अपि = भी, युधिष्ठिरस्य = युधिष्ठिर के, नारीमृदूनि = अबला के ( वचनों की तरह ) सुकोमल, वचनानि = वचनों को, श्रोतुम् = सुनने के लिये, कर्णौ = कानों को, सज्जय = तत्पर रक्खो ॥ १३ ॥

**प्राप्त इति ।** अद्य = अस्मिन् दिने, सम्प्रतीति यावत्, कृष्णमतिः—कृष्णा = कलुषिता मतिः = बुद्धिः यस्य सः, मलिनमतिरिति भावः, सः = धूर्तत्वेन ख्यातः इत्यर्थः, कृष्णः = वासुदेवः, पाण्डवानाम् = पाण्डुपुत्राणां युधिष्ठिरादीनाम्, वचनात् = कथनात्, प्रार्थनयेति भावः, दौत्येन = दूतभावेन, भृत्यः = सेवकः, इव = यथा, इह = अत्र सभायाम्, प्राप्तः = आगतः, किलेति संभावनायाम्, ( 'वार्तासम्भाव्ययोः किल' इत्यमरः ) अतः हे सखे = हे मित्र, कर्ण = राधेय, त्वमपि, युधिष्ठिरस्य = ज्येष्ठपाण्डवस्य, नारीमृदूनि—नारी = अबला इव मृदूनि = कोमलानि, वचनानि = वाक्यानि, कृष्णानीतानि युधिष्ठिरवचनानीत्यर्थः, श्रोतुम = आकर्णयितुम्, कर्णौ = श्रोत्रे, सज्जय = अवहितौ कुरु । अवधानेन मनसा शृणिवति भावः । अत्र उपमाऽलङ्कारः । वसन्ततिलका छन्दः । छन्दलक्षणम्—'उक्ता वसन्ततिलका तभजा जगौ गः' ॥ १३ ॥

**वासुदेव इति**—धर्मराजवचनात्—धर्मराजः = युधिष्ठिरः तस्य वचनात् = अनुरोधादित्यर्थः, धनञ्जयाकृत्रिममित्रतया—धनञ्जयः = अर्जुनः तस्य अकृत्रिमा = स्वाभाविकी या मित्रता = सखित्वम् तया, आहवदर्पम्—आवहे = युद्धे दर्पः = अभिमानम् यस्य तम्, अनुक्तग्राहिणम्—उक्तम् = कथितम् न गृह्णाति = न शृणोति, उक्तमवधीरयतीत्यर्थः तम्, सुयोधनम् = दुर्योधनम्, अनुचितदौत्यसमयः—अनुचितः = असमीचीनश्चासौ दौत्यसमयः = दौत्याचारः, समयः = आचारः, अनुष्ठितः = अङ्गीकृतः ॥

**अन्वयः**—रिपुवाहिनीभकुम्भस्थलीदलनतीक्ष्णगदाधरस्य, भीमस्य, कृष्णापराभवभुवा, कोपशिखिना च पार्थपत्त्रिचण्डानिलैः युधि कुरुवंशवनम् विनष्टम् पश्यामि ॥ १४ ॥



**शब्दार्थः**—रिपुवाहिनीभकुम्भस्थलीदलनतीक्ष्णगदाधरस्य = शत्रु–सेना के गजराजों के गण्ड-

( तदनन्तर कृष्ण और काञ्चुकीय प्रवेश करते हैं )

**वासुदेव**—आज वस्तुतः युधिष्ठिर के कहने से तथा अर्जुन की हार्दिक ( स्वाभाविक ) मित्रता के कारण युद्ध के लिए हठ करने वाले, सलाह न मानने वाले, सुयोधन के प्रति मैंने अनुचित भी दूत-कार्य को अङ्गीकार किया है। और भी—

शत्रु-सेना के गजराजों के गण्डस्थल को विदीर्ण करने वाली उग्र गदा को धारण करने वाले भीम के, द्रौपदी के अपमान से उत्पन्न, क्रोधरूपी आग के द्वारा तथा अर्जुन के बाण-रूपी झंझावातों से, संग्राम में, बाँस-सदृश कौरवों के वन को नष्ट हुआ ( देख रहा हूँ ) ॥ १४ ॥

यह दुर्योधन का शिविर है। यहाँ तो—

अपनी इच्छा के अनुसार निर्मित, राजाओं के आवास देवलोक के समान ( हैं )। बहुत प्रकार से कार्य करने वाले शस्त्रों से भरे हुए, विशाल शस्त्रागार ( हैं )। घोड़-साल में स्थित उत्तम जाति के घोड़ों की कतारें हिन-हिना रही हैं। हाथी चिग्घाड़ रहे हैं। ( दुर्योधन का ) यह बढ़ा हुआ ऐश्वर्य अपने ही व्यक्तियों का अनादर करने के कारण शीघ्र ही विनष्ट होने वाला ( है ) ॥ १५ ॥

---

स्थल को विदीर्ण करने वाली उग्र गदा को धारण करनेवाले, भीमस्य = भीम के, कृष्णापराभव-भुवा = द्रौपदी के अपमान से उत्पन्न, कोपशिखिना = क्रोधरूपी आग के द्वारा, च = तथा, पार्थ-पत्त्रिचण्डानिलैः = अर्जुन के बाण रूपी झंझावातों से, युधि = संग्राम में, कुरुवंशवनम् = बाँस सदृश कौरवों के वन को, विनष्टम् = नष्ट हुआ, (पश्यामि = देख रहा हूँ) ॥ १४ ॥

कृष्णो भाविनं कुरुकुलविनाशमुत्प्रेक्षते—**कृष्णापराभवभुवेत्यादिना**। रिपुवाहिनीत्यादिः—रिपूणाम् = शत्रूणाम् वाहिनी = सेना तस्याः ये इभाः = गजाः ( 'गजो नागः···इभः' इत्यमरः ) तेषां कुम्भस्थल्यः = गण्डप्रदेशाः तासां दलने = विदारणे तीक्ष्णा = उग्रा या गदा तस्याः धरस्य = धारयितुः भीमस्य = वृकोदरस्य, कृष्णापराभवभुवा—कृष्णायाः = द्रौपद्याः यः पराभवः = अपमानम् वस्त्रकेशकर्षणरूपमपमानमित्यर्थः, तस्मात् भूः = जातः तेन, कोपशिखिना-कोपः = क्रोधः एव शिखी = वह्निः तेन, च = तथा, पार्थपत्त्रिचण्डानिलैः—पार्थः = अर्जुनः तस्य पत्त्रिणः = बाणाः एव चण्डानिलाः = प्रचण्डवायवः तैः, युधि = संग्रामे, कुरुवंशवनम्—कुरवः = कौरवाः वंशाः वेणव इवेति कुरुवंशास्तेषां वनम् = अरण्यं तत्, विनष्टम् = ध्वस्तम्, ( पश्यामि = उत्प्रेक्षे )। मामकीनोऽयं प्रयासः स्वगोत्रक्षयाशङ्किनो युधिष्ठिरस्य प्रार्थनया न तु तस्य भीत्येति भावः। अत्र रूपकमलङ्कारः। वसन्ततिलका छन्दः ॥ १४ ॥

**अन्वयः**—स्वच्छन्दविहिताः, पार्थिवानाम्, आवासाः, सुरपुरसदृशाः, ( सन्ति ); बहुविध-करणैः, शस्त्रैः, उपचिताः, विस्तीर्णाः, शस्त्रशालाः, (सन्ति); मन्दुरास्थाः, तुरगवरघटाः, हेषन्ते; करिणः, बृंहन्ति; एतत्, स्फीतम्, ऐश्वर्यम्, स्वजनपरिभवात्, आसन्नविलयम्, (आस्ते) ॥१५॥

**शब्दार्थः**—स्वच्छन्दविहिताः = अपनी इच्छा के अनुसार निर्मित, पार्थिवानाम् = राजाओं के, आवासाः = आवास, सुरपुरसदृशाः = देवलोक के समान, ( सन्ति = हैं ); बहुविधकरणैः =

भोः !

दुष्टवादी गुणद्वेषी शठः स्वजननिर्दयः ।
सुयोधनो हि मां दृष्ट्वा नैव कार्यं करिष्यति ॥ १६ ॥

भो बादरायण ! किं प्रवेष्टव्यम् ।

**काञ्चुकीयः**—अथ किमथ किम् । प्रवेष्टुमर्हति पद्मनाभः ।

**वासुदेवः**—( प्रविश्य ) कथं कथं मां दृष्ट्वा संभ्रान्ताः सर्वक्षत्रियाः । अलमलं संभ्रमेण। स्वैरमासतां भवन्तः ।

**दुर्योधनः**—कथं कथं केशवं दृष्ट्वा संभ्रान्ताः सर्वक्षत्रियाः । अलमलं संभ्रमेण । स्मरणीयः पूर्वमाश्रावितो दण्डः । नन्वहमाज्ञप्ता ।

**वासुदेवः**—भोः सुयोधन ! किमास्से ।

**दुर्योधनः**—( आसनात् पतित्वा आत्मगतम् ) सुव्यक्तं प्राप्त एव केशवः ।

---

बहुत प्रकार से कार्य करने वाले, शस्त्रैः = शस्त्रों से, उपचिताः = भरे हुए, विस्तीर्णाः = विशाल, शस्त्रशालाः = शस्त्रागार, ( सन्ति = हैं ); मन्दुरास्थाः = घोड़साल में स्थित, तुरगवरघटाः = उत्तम जाति के घोड़ों की कतारें, हेषन्ते = हिन-हिना रही हैं; करिणः = हाथी, बृंहन्ति = चिग्घाड़ रहे हैं; एतत् = यह, स्फीतम् = बढ़ा हुआ, ऐश्वर्यम् = ऐश्वर्य, स्वजनपरिभवात् = अपने ही व्यक्तियों का अनादर करने के कारण, आसन्नविलयम् = शीघ्र ही विनष्ट होने वाला, ( आस्ते = है ) ॥ १५ ॥

दुर्योधनस्यैश्वर्यं वर्णयन् तस्य भाविनीं परिणतिं कल्पयति—**आवासा इति ।** स्वच्छन्दविहिताः—स्वच्छन्देन = स्वेच्छया, स्वेच्छानुसारमिति भावः, विहिताः = निर्मिताः, पार्थिवानाम् = भूपालानाम् , आवासाः = निवासस्थानानि, सुरपुरसदृशाः—सुराणाम् = देवानाम् पुराणि = नगराणि तैः सदृशाः = तुल्याः, सन्तीति क्रियाशेषः, बहुविधकरणैः-बहुविधानि = भिन्नप्रकाराणि करणानि = कार्याणि येषां तानि तैः, शस्त्रैः = आयुधैः, उपचिताः = वृद्धिङ्गताः, विस्तीर्णाः = विशालाः, शस्त्रशालाः = आयुधागाराणि, सन्तीति शेषः; मन्दुरास्थाः—मन्दुरायाम् = वाजिशालायाम् ( 'वाजिशाला तु मन्दुरा' इत्यमरः) तिष्ठन्तीति मन्दुरास्थाः = वाजिशालायां वर्तमानाः, तुरगवरघटाः—तुरगवराणाम् = अश्वश्रेष्ठानाम् घटाः = पंक्तयः, घटाशब्दस्य करिसमवाये एव निरूढिरिति, हेषन्ते = ह्रेषन्ते ( 'अश्वानां हेषा ह्रेषा तु निस्वनः' इत्यमरः ) करिणः = हस्तिनः, बृंहन्ति = गर्जन्ति ( 'बृंहणं करिगर्जितम्' इत्यमरः ); एतत् = पुरतो दृश्यमानम्, स्फीतम् = प्रवृद्धम्, ऐश्वर्यम् = वैभवम्, स्वजनपरिभवात्—स्वजनानाम् = स्वकीयानाम् परिभवः = = तिरस्कारः तस्मात् , आसन्नविलयम्—आसन्नः = समीपस्थः विलयः = विनाशः यस्य तत्

अजी ! दुष्ट वचन बोलने वाला, गुणों ( अर्थात् गुणियों ) से द्वेष करने वाला, शठ, अपने बन्धुओं के प्रति निर्दय दुर्योधन मुझे देख कर निश्चय ही कार्य ( अर्थात् सन्धि ) को नहीं ही करेगा ॥ १६ ॥

हे बादरायण, क्या प्रवेश करना चाहिये ?

**काञ्चुकीय**—और क्या, और क्या ( अर्थात् प्रवेश करना ही चाहिये )। पद्मनाभ ( आप ) प्रवेश करने के अधिकारी हैं।

**वासुदेव**—( प्रवेश करके ) क्या, क्या, मुझे देखकर सभी क्षत्रिय घबड़ा गये ? घबराहट से बस बस ( अर्थात् घबड़ाने की आवश्यकता नहीं )। आप लोग आराम से बैठ जाँय।

**दुर्योधन**—क्या क्या, केशव को देखकर सभी क्षत्रिय घबड़ा गये ( अर्थात् घबड़ा कर उठ गये ) बस, बस घबड़ाने से ( अर्थात् घबड़ाने की आवश्यकता नहीं है )। पहले ही सुनाये गये दण्ड को याद रखना है। अरे, आज्ञा देने वाला मैं हूँ।

**वासुदेव**—हे दुर्योधन, क्या बैठे हो ( अर्थात् क्या समाचार है ) ?

**दुर्योधन**—( आसन से गिर कर अपने आप ) वस्तुतः केशव ( नारायण ) ही आ गया है।

---

तादृशम् , आस्ते इति क्रियाशेषः। बन्धुविरोधादाश्वेवास्य विनाश इत्यभिप्रायः। उपमाऽलङ्कारः। सुवदना छन्दः। तल्लक्षणम्—'ज्ञेया सप्ताश्वषड्भिर्मरभनययुता म्लौ गः सुवदना' ॥१५॥

**अन्वयः**—दुष्टवादी, गुणद्वेषी, शठः, स्वजननिर्दयः, सुयोधनः, माम् , दृष्ट्वा, हि, कार्यम् , नैव, करिष्यति ॥ १६ ॥

**शब्दार्थः**—दुष्टवादी = दुष्टवचन बोलने वाला, गुणद्वेषी = गुणों से द्वेष करने वाला, शठः = शठ, स्वजननिर्दयः = अपने बन्धुओं के प्रति निर्दय, सुयोधनः = दुर्योधन, माम् = मुझे, दृष्ट्वा = देखकर, हि = निश्चय ही, कार्यम् = कार्य ( अर्थात् सन्धि ) को, नैव = नहीं ही, करिष्यति = करेगा ॥ १६ ॥

दुर्योधनस्य स्वभावकथनमुखेन सन्धिप्रस्तावस्य भाविनीं परिणतिं कल्पयति—**दुष्टवादीति**। दुष्टवादी–दुष्टम् = कर्णकटु, अप्रियमित्यर्थः, वदति = भाषते इति दुष्टवादी, गुणद्वेषी–गुणान् = सद्भावान् द्वेष्टि इति गुणद्वेषी = गुणिनामसत्कर्तेति भावः, शठः = धूर्तः, स्वजननिर्दयः-स्वजनेषु = स्वकीयेषु निर्दयः = दयारहितः, अकृप इति यावत्, सुयोधनः = दुर्योधनः, माम् = पाण्डवपक्षावलम्बिनं मां कृष्णमित्यर्थः, दृष्ट्वा = अवलोक्य, हीति निश्चये, कार्यम् = सन्धि-रूपं प्रयोजनमित्यर्थः, नैव = कथमपि नेत्यर्थः, करिष्यति = विधास्यति । अनुष्टुप् छन्दः ॥ १६ ॥

**उत्साहेन मतिं कृत्वाप्यासीनोऽस्मि समाहितः।**
**केशवस्य प्रभावेण चलितोऽस्म्यासनादहम् ॥ १७ ॥**

अहो बहुमायोऽयं दूतः। ( प्रकाशम् ) भो दूत ! एतदासनमास्यताम्।

**वासुदेवः**—आचार्य ! आस्यताम्। गाङ्गेयप्रमुखा राजानः ! स्वैरमासतां भवन्तः। वयमप्युपविशामः। ( उपविश्य ) अहो दर्शनीयोऽयं चित्रपटः। मा तावत्। द्रौपदीकेशधर्षणमत्रालिखितम्।

अहो नु खलु,

**सुयोधनोऽयं स्वजनावमानं पराक्रमं पश्यति बालिशत्वात्।**
**को नाम लोके स्वयमात्मदोषमुद्घाटयेन्नष्टघृणः सभासु ॥ १८ ॥**

आः अपनीयतामेष चित्रपटः।

**दुर्योधनः**—बादरायण ! अपनीयतां किल चित्रपटः।

**काञ्चुकीयः**—यदाज्ञापयति महाराजः। ( अपनयति। )

**दुर्योधनः**—भो दूत !

**धर्मात्मजो वायुसुतश्च भीमो भ्रातार्जुनो मे त्रिदशेन्द्रसूनुः।**
**यमौ च तावश्विसुतौ विनीतौ सर्वे सभृत्याः कुशलोपपन्नाः ॥ १९ ॥**

---

**अन्वयः**—( यद्यपि ), अहम्, उत्साहेन, मतिम्, कृत्वा, अपि, समाहितः ( सन् ), आसीनः, अस्मि; ( तथापि ), केशवस्य, प्रभावेण, आसनात्, चलितः, अस्मि ॥ १७ ॥

**शब्दार्थः**—( यद्यपि = यद्यपि ), अहम् = मैं, उत्साहेन = उत्साह पूर्वक, मतिम् = निश्चय, कृत्वा = करके, अपि = भी, समाहितः = सावधान, ( सन् = होकर ), आसीनः = आसन पर विराजमान, अस्मि = हूँ; ( तथापि = तो भी ), केशवस्य = केशव के, प्रभावेण = प्रभाव से, आसनात् = आसन से, चलितः = च्युत, अस्मि = हो गया हूँ ॥ १७ ॥

**उत्साहेनेति**। (यद्यपि), अहम् = दुर्योधनः इत्यर्थः, उत्साहेन = प्रयासेनेति भावः, मतिम् = बुद्धिम्, बुद्धौ निश्चयमित्यर्थः। कृत्वा = विधाय, अपि = च, समाहितः = सावधानः सन्, आसीनः = आसने स्थितः, अस्मि = वर्ते; त थापीतिशेषः, केशवस्य = नारायणस्य, प्रभावेण = माहात्म्येन, तेजसेति भावः, आसनात् = पीठिकातः, सिंहासनादित्यर्थः, चलितः = च्युतः, अस्मि = वर्ते। अनुष्टुप् छन्दः ॥ १७ ॥

**अन्वयः**—अयम्, सुयोधनः, बालिशत्वात्, स्वजनावमानम्, पराक्रमम्, पश्यति; लोके, को नाम, नष्टघृणः, सभासु, स्वयम्, आत्मदोषम्, उद्घाटयेत् ॥ १८ ॥

**शब्दार्थः**—अयम् = यह, सुयोधनः = दुर्योधन, बालिशत्वात् = मूर्खता के कारण, स्वजनावमानम् = अपने (ही) व्यक्तियों के अपमान को, पराक्रमम् = पराक्रम, पश्यति = देख रहा है, समझ रहा है; लोके = संसार में, को नाम = कौन-सा, नष्टघृणः = निर्दय ( व्यक्ति ), सभासु = सभाओं में, आत्मदोषम् = अपने दोष को, उद्घाटयेत् = प्रकाशित करेगा ॥ १८ ॥

( यद्यपि ) मैं उत्साहपूर्वक ( न उठने का ) निश्चय करके भी सावधान होकर आसन पर विराजमान हूँ, ( तो भी ) केशव ( नारायण ) के प्रभाव से आसन से च्युत हो गया हूँ ( अर्थात् गिर गया हूँ ) ॥ १७ ॥

ओह ! यह दूत बहुत मायावी है । ( प्रकट रूप में ) हे दूत, यह आसन है, बैठिये ।

**वासुदेव**—आचार्य ! बैठिये । भीष्म आदि राजा लोग ! आप ( भी ) यथेच्छ बैठ जाँय । हम भी बैठते हैं । ( बैठकर ) वाह ! देखने योग्य है यह चित्र-पट । अच्छा, रहने दें । इसमें द्रौपदी के केशों का खींचना चित्रित किया गया है । ओह ! यह तो—

यह दुर्योधन मूर्खता के कारण अपने ( ही ) व्यक्तियों के अपमान को ( अपना ) पराक्रम समझ रहा है । संसार में कौन-सा निर्दय ( व्यक्ति ) सभाओं में अपने दोष को प्रकाशित करेगा ? ॥ १८ ॥

आह ! यह चित्र-पट ( यहाँ से ) हटा दिया जाय ।

**दुर्योधन**—बादरायण, अवश्य ही इस चित्र-पट को हटा दिया जाय ।

**काञ्चुकीय**—महाराज जैसी आज्ञा दे रहे हैं ( वैसा ही किया जायगा ) । ( दूर हटाता है )

**दुर्योधन**—हे दूत,

यमराज के पुत्र ( युधिष्ठिर ), तथा पवन-पुत्र भीम, देवराज ( इन्द्र ) के पुत्र, मेरे भाई अर्जुन, और विनीत, अश्विनी कुमारों के पुत्र वे जुड़वे ( अर्थात् नकुल एवं सहदेव )—सभी परिजनों के सहित सकुशल ( तो हैं ) ? ॥ १९ ॥

**विशेष—मे भ्राता**—अर्जुन स्वर्ग से लौट रहे थे । मार्ग में उन्होंने देखा कि दुर्योधन को चित्रसेन नामक एक गन्धर्व पकड़े जा रहा है । फिर क्या था ? पराक्रमी अर्जुन झपट पड़े । गन्धर्व के चंगुल से दुर्योधन का उद्धार किये । यही कारण है कि दुर्योधन उन्हें अपना भाई बतला रहा है ।

---

**सुयोधन इति** । अयम् = एषः, सुयोधनः = दुर्योधनः, बालिशत्वात्–बालिशः = मूर्खः तस्य भावः बालिशत्वम् = मौर्ख्यम् तस्मात्, स्वजनावमानम्–स्वजनानाम् = स्वबन्धूनाम् अवमानम् = अपमानम्, पराक्रमम् = विक्रमम्, पश्यति = अवलोकयति, विचारयतीत्यर्थः; लोके = संसारे, को नाम = कः, नामेति प्रश्ने, नष्टघृणः–नष्टा = अपगता घृणा = दया ('घृणा दयाऽनुकम्पा स्यात्' इत्यमरः ) यस्य सः, सभासु = समितौ, स्वयम् = स्वेनैवेत्यर्थः, आत्मदोषम्–आत्मनः = स्वस्य दोषम् = अकार्यम्, आत्मना कृतमकार्यमित्यर्थः, उद्घाटयेत् = प्रकाशयेत् । दुर्योधनसदृशं दुष्टं विहाय नान्यो जन एतादृशमकार्यं करोतीति भावः । उपजातिछन्दः ॥ १८ ॥

**अन्वयः**—धर्मात्मजः, च, वायुसुतः, भीमः, त्रिदशेन्द्रसूनुः, मे, भ्राता, अर्जुनः, च, विनीतौ, अश्विसुतौ, तौ, यमौ, सर्वे, सभृत्याः, कुशलोपपन्नाः, (सन्ति ) ॥ १९ ॥

**शब्दार्थः**—धर्मात्मजः = यमराज के पुत्र ( युधिष्ठिर ), च = तथा, वायुसुतः = पवन–पुत्र, भीमः = भीम, त्रिदशेन्द्रसूनुः = देवराज ( इन्द्र ) के पुत्र, मे = मेरे, भ्राता = भाई, अर्जुनः =

**वासुदेवः**—सदृशमेतद् गान्धारीपुत्रस्य। अथ किमथ किम्। कुशलिनः सर्वे। भवतो राज्ये शरीरे बाह्याभ्यन्तरे च कुशलमनामयं च पृष्ट्वा विज्ञापयन्ति युधिष्ठिरादयः पाण्डवाः—

**अनुभूतं महद् दुःखं संपूर्णः समयः स च।**
**अस्माकमपि धर्म्यं यद् दायाद्यं तद् विभज्यताम् ॥ २० ॥**

इति।

**दुर्योधनः**—कथं कथं दायाद्यमिति।

**वने पितृव्यो मृगयाप्रसङ्गतः कृतापराधो मुनिशापमाप्तवान्।**
**तदाप्रभृत्येव स दारनिस्पृहः परात्मजानां पितृतां कथं व्रजेत् ॥ २१ ॥**

---

अर्जुन, च = और, विनीतौ = विनीत, अश्विसुतौ = अश्विनी कुमारों के पुत्र, तौ = वे, यमौ = जुड़वे, सर्वे = सभी, सभृत्याः = परिजनों के सहित, कुशलोपपन्नाः = सकुशल, (सन्ति = हैं) ॥१९॥

**धर्मात्मज इति।** धर्मात्मजः—धर्मस्य = यमस्य आत्मजः = सुतः, च, वायुसुतः–वायोः = पवनस्य सुतः = पुत्रः, भीमः = वृकोदरः, त्रिदशेन्द्रसूनुः–तिस्रः दशाः = अवस्थाः बाल्य-कैशोरप्रौढावस्थाः येषां ते त्रिदशाः = देवाः तेषाम् इन्द्रः = अधिपतिः देवराजः तस्य सूनुः = पुत्रः, मे = मम, भ्राता = बन्धुः, अर्जुनः = किरीटी, च = तथा, विनीतौ = नम्रौ, अश्विसुतौ = अश्विनीकुमारपुत्रौ, तौ = त्यौ, यमौ = सहजातौ, नकुलसहदेवावित्यर्थः, सर्वे = निखिलाः, सभृत्याः = सपरिजनाः, कुशलोपपन्नाः—कुशलैः = कल्याणैः उपपन्नाः = युक्ताः सन्तीति क्रिया-शेषः। अत्र पाण्डवानां तत्तत्पितृनामग्रहणात्तेषां वर्णसाङ्कर्यं सूचितम्। उपजातिवृत्तम् ॥ १९ ॥

**अन्वयः**—महत्, दुःखम्, अनुभूतम्; सः, समयः, च, सम्पूर्णः; अस्माकम्, अपि, यत्, धर्म्यम्, दायाद्यम्, ( अस्ति ), तत्, विभज्यताम् ॥ २० ॥

**शब्दार्थः**—महत् = महान्, दुःखम् = कष्ट, अनुभूतम् = सहा गया; सः = वह ( अर्थात् तेरह वर्ष की अवधि वाला ), समयः = समय, च = भी, सम्पूर्णः = बीत गया; अस्माकम् = हम लोगों का, अपि = भी; यत् = जो, धर्म्यम् = धर्मानुकूल, दायाद्यम् = पैतृक सम्पत्ति रूप खाना-पानी, ( अस्ति = है ), तत् = उसे, विभज्यताम् = बाँट दें ॥ २० ॥

**अनुभूतमिति।** महत् = दुःसहमित्यर्थः, दुःखम् = कष्टम्, अनुभूतम् = भुक्तम्, सः = पूर्वनिर्धारितः इत्यर्थः, समयः = कालः सपथो वा, सम्पूर्णः = व्यतीतः; अतः, अस्माकम् = पाण्डवानामित्यर्थः, अपि = च, यत्, धर्म्यम्–धर्मादनपेतं धर्म्यम् = धर्मानुसारि, दायाद्यम्–दायः = कुलधनम् तद्रूपम् आद्यम् = अदनीयम्, भोग्यं वस्तु, इति दायाद्यम्, अस्तीति क्रियाशेषः, तत् = त्यद्, विभज्यताम् = विभज्य दीयताम्। अनुष्टुप् छन्दः ॥ २० ॥

**अन्वयः**—वने, मृगयाप्रसङ्गतः, कृतापराधः, ( मे ), पितृव्यः, मुनिशापम्, आप्तवान्; तदाप्रभृति, एव, सः, दारनिस्पृहः, ( जातः, अतः ), परात्मजानाम्, पितृताम्, कथम्, व्रजेत् ॥ 

**शब्दार्थः**—वने = जंगल में, मृगयाप्रसङ्गतः = शिकार खेलने के सिलसिले में, कृतापराधः

**धर्मात्मजो वायुसुतश्च**—युधिष्ठिर यमराज के, भीम वायु के, अर्जुन इन्द्र के तथा नकुल एवं सहदेव अश्विनीकुमारों के पुत्र थे। दुर्योधन, कुन्ती एवं माद्री के साथ संयोग करके पाण्डवों को पैदा कराने वाले देवों का नाम लेकर उनकी वर्णसङ्करता सूचित करा रहा है॥१९॥

**वासुदेवः**—गान्धारी के पुत्र के लिये (अर्थात् तुम्हारे लिये) यह उचित ही है। और क्या, और क्या। सकुशल हैं सभी लोग। आपके राज्य एवं बाहरी तथा भीतरी शरीर के विषय में कुशल तथा नीरोगता को पूछ कर युधिष्ठिर आदि पाण्डव निवेदन करते हैं–

**विशेष–गान्धारीपुत्रस्य**—कृष्ण ने दुर्योधन के ईंट का जवाब पत्थर से दिया है। यहाँ 'गान्धारीपुत्र' से उनका भाव है 'अन्धीपुत्र'। गान्धारी धृतराष्ट्र के अन्धे हो जाने पर आँखों पर पट्टी लगाये रहा करती थी। कृष्ण का भाव है कि अन्धों का पुत्र अन्धा (विवेक शून्य) ही न होगा ?

**बाह्याभ्यन्तरे**—'बाह्य' से बाहरी अर्थात् देखा जा रहा शरीर तथा 'आभ्यन्तर' से भीतरी अर्थात् मानसिक शरीर कहा गया है।

**कुशलम् अनामयम्**—राज्य में कुशल तथा शरीर में नीरोगता की बात पूछी गई है।

(हम लोगों के द्वारा) महान् कष्ट सहा गया, वह (अर्थात् तेरह वर्ष की अवधि वाला) समय भी बीत गया। (अब) हम लोगों का भी जो धर्मानुकूल पैतृक-सम्पत्ति रूप खाना-पानी (अर्थात् हक) है, उसे बाँट दें ॥ २० ॥

**दुर्योधन**—कैसा, कैसा हक ?

जङ्गल में, शिकार खेलने के सिलसिले में अपराध को कर बैठने वाले (मेरे) चाचा (पाण्डु) जो मुनि के श्राप को प्राप्त किये थे। तभी से ही वे स्त्री-(सम्भोग) से पराङ्मुख (हो गये थे, इस लिये) दूसरों के द्वारा उत्पन्न हुये (पुत्रों) के पिता-भाव को कैसे प्राप्त होंगे (अर्थात् युधिष्ठिर आदि के वे पिता कैसे हो सकते हैं)? ॥ २१ ॥

**विशेष—पितृव्यः...मुनिशापमाप्तवान्**—मुनि किन्दम और उनकी पत्नी हरिण तथा हरिणी का रूप धारण कर जङ्गल में विहार कर रहे थे। उसी समय शिकार खेलते हुए पाण्डु वहाँ पहुँचे और उन्हें अपने बाण का निशाना बनाया। मरने के पहले ऋषि ने अपने असली रूप में होकर श्राप दिया—'तुम ज्यों ही स्त्री का आलिङ्गन करोगे, तभी तुम्हारी मृत्यु हो जायगी।' यद्यपि वे तब तक निःसन्तान थे। फिर भी मृत्यु के भय से उन्होंने स्त्री-संभोग का परित्याग कर दिया था। उनकी पत्नी कुन्ती एवं माद्री ने देवताओं के साथ सम्भोग करके पुत्रों को उत्पन्न किया था। वस्तुतः पाण्डु ऐसी अवस्था में उनके पिता कैसे बन सकते थे ? देखिये-महाभारत, आदि पर्व ॥ २१ ॥

---

=अपराध को कर बैठने वाले, (मे=मेरे), पितृव्यः=चाचा जी, मुनिशापम्=मुनि के श्राप को, आप्तवान्=प्राप्त किये थे; तदाप्रभृति=तभी से, एव=ही, सः=वे, दारनिस्पृहः=स्त्री से पराङ्मुख, (जातः=हो गये थे, अतः=इसलिए), परक्षेत्रजानाम्=दूसरों के द्वारा उत्पन्न हुए (पुत्रों) के, पितृताम्=पिता-भाव को, कथम्=कैसे, व्रजेत्=प्राप्त होंगे ॥ २१ ॥

**वासुदेवः**—पुराविदं भवन्तं पृच्छामि ।

विचित्रवीर्यो विषयी विपत्तिं क्षयेण यातः पुनरम्बिकायाम् ।
व्यासेन जातो धृतराष्ट्र एष लभेत राज्यं जनकः कथं ते ॥ २२ ॥

मा मा भवान्

एवं परस्परविरोधविवर्धनेन
शीघ्रं भवेत् कुरुकुल नृप ! नामशेषम् ।
तत् कर्तुमर्हति भवानपकृष्य रोषं
यत् त्वां युधिष्ठिरमुखाः प्रणयाद् ब्रुवन्ति ॥ २३ ॥

**दुर्योधनः**—भो दूत ! न जानाति भवान् राज्यव्यवहारम् ।

राज्यं नाम नृपात्मजैः सहृदयैर्जित्वा रिपून् भुज्यते
तल्लोके न तु याच्यते न तु पुनर्दीनाय वा दीयते ।

---

युधिष्ठिरादीनामनधिकारित्वं साधयति राज्यस्य दुर्योधनो—**वने पितृव्य इति** । वने = अरण्ये, मृगयाप्रसङ्गतः-मृगया = आखेटः तस्य प्रसङ्गतः = सम्बन्धतः, कृतापराधः—कृतः = विहितः अपराधः = अनौचित्यम् येन सः, ( मे = मम ), पितृव्यः = पितुरनुजः, पाण्डुरिति, मुनिशापम्—मुनेः = किन्दमऋषेः शापम् = श्रापम्, आप्तवान् = प्राप्तवान्, तदाप्रभृति = तस्मात् कालात् आरभ्य, एवेति दार्ढ्ये, सः = मम पितृव्यः पाण्डुः, दारनिस्पृहः—दारेषु = स्त्रीषु निस्पृहः = मरणभयादभिलाषाशून्यः, ( जातः, अतः ), परात्मजानाम् = परैर्जातानां पुत्राणाम्, पितृताम् = जनकभावम्, कथम् = केन प्रकारेण, व्रजेत् = प्राप्नुयात्, न कथमपीति भावः । वंशस्थवृत्तम् । तल्लक्षणम्-'जतौ तु वंशस्थमुदीरितं जरौ ॥' २१ ॥

**वासुदेवः इति** । पुरा = प्राचीनां परम्परामिति भावः वेत्तीति = जानातीति पुरावित् तम् ॥

**अन्वयः**—विषयी, विचित्रवीर्यः, क्षयेण, विपत्तिम्, यातः, पुनः, अम्बिकायाम्, व्यासेन, जातः, एषः, धृतराष्ट्रः, ते, जनकः, कथम्, राज्यम्, लभेत ॥ २२ ॥

**शब्दार्थः**—विषयी = विषय में आसक्त रहने वाला, विचित्रवीर्यः = विचित्रवीर्य, क्षयेण = क्षय रोग से, विपत्तिम् = मृत्यु को, यातः = प्राप्त हुआ था, पुनः = तदनन्तर, अम्बिकायाम् = अम्बिका में, व्यासेन = व्यास के द्वारा, जातः = उत्पन्न, धृतराष्ट्रः = धृतराष्ट्र, ते = तुम्हारा, जनकः = पिता, कथम् = कैसे, राज्यम् = राज्य को, लभेत = पाया ? ॥ २२ ॥

तस्यामेव परिस्थितौ धृतराष्ट्रो राज्यस्याधिकारी अभूत्, यस्यां पाण्डवाः सन्तीति साधयति कृष्णः-**विचित्रवीर्यं इति** । विषयी = स्त्रीलम्पटः, विचित्रवीर्यः = विचित्रवीर्यनामा तव पिता-महः, क्षयेण = राजयक्ष्मव्याधिना, विपत्तिम् = मृत्युमित्यर्थः, जातः = प्राप्तः, पुनः = तदनन्तरम्, अम्बिकायाम् = अम्बिकानाम्न्यां तव पितामह्याम्, व्यासेन = द्वैपायनेन, जातः = उत्पन्नः, एषः = अयम्, धृतराष्ट्रः, ते = तव, जनकः = पिता, कथम् = केन प्रकारेण, कया नीत्येत्यर्थः, राज्यम् = ( मण्डलाधिपत्यम्, लभेत = प्राप्नुयात् । यदि स उत्तराधिकारी भवितुमर्हति तदा एषोऽपि अर्हतीति भावः । उपजातिश्छन्दः ॥ २२ ॥

**वासुदेव**—परम्परा ( पुरानी बातों ) को जानने वाले आप से ( मैं ) पूछता हूँ।

विषय में आसक्त रहने वाला विचित्रवीर्य क्षयरोग से मृत्यु को प्राप्त हुआ था, तदनन्तर अम्बिका में व्यास के द्वारा उत्पन्न धृतराष्ट्र तुम्हारा पिता कैसे राज्य को पाया ?॥२२॥

**विशेष**—दुर्योधन के पिता धृतराष्ट्र के पिता का नाम था विचित्रवीर्य। उसके मर जाने पर उसकी पत्नी अम्बिका ने व्यास के साथ सम्भोग करके धृतराष्ट्र को पैदा किया था। यही धृतराष्ट्र बड़ा होने पर राज्य का उत्तराधिकारी बना॥ २२॥

नहीं-नहीं आप ऐसा न कहें,

हे राजन्, इस प्रकार आपस में वैर बढ़ाने से शीघ्र ही कौरव-वंश नाममात्र से ही अवशिष्ट रह जायगा ( अर्थात् विनष्ट हो जायगा )। ( इसलिये ) आप क्रोध को दूर करके वह करने के योग्य हैं, जो कि आपको युधिष्ठिर आदि प्रेमवश कह रहे हैं ( अर्थात् आपको वह करना चाहिये जो युधिष्ठिर आदि कह रहे हैं )॥ २३॥

**दुर्योधन**—हे दूत, आप राज्य के व्यवहार को नहीं जानते हैं।

दृढ-हृदय राजपुत्रों के द्वारा, शत्रुओं को जीतकर, राज्य भोगा जाता है ( अर्थात् दृढ-हृदय राजपुत्र शत्रुओं को जीतकर राज्य का भोग करते हैं )। संसार में वह (अर्थात् राज्य) न तो माँगा जाता है और न तो दीन ( अर्थात् याचक ) के लिये दिया ही जाता है।

---

**अन्वयः**—हे नृप, एवम्, परस्परविरोधविवर्धनेन, शीघ्रम्, कुरुकुलम्, नामशेषम्, भवेत्, ( अतः ), भवान्, रोषम्, अपकृष्य, तत्, कर्तुम्, अर्हति, यत्, त्वाम्, युधिष्ठिरमुखाः, प्रणयात्, ब्रुवन्ति॥ २३॥

**शब्दार्थः**—हे नृप = हे राजन्, एवम् = इस प्रकार, परस्परविरोधविवर्धनेन = आपस में वैर बढ़ाने से, शीघ्रम् = शीघ्र ही, कुरुकुलम् = कौरव-वंश, नामशेषम् = नाम मात्र से ही अवशिष्ट, भवेत् = रह जायगा; ( अतः = इसलिये ), भवान् = आप, रोषम् = क्रोध को, अपकृष्य = दूर करके, तत् = वह, कर्तुम् = करने के, अर्हति = योग्य हैं, यत् = जो कि, त्वाम् = आपको, युधिष्ठिरमुखाः = युधिष्ठिर आदि, प्रणयात् = प्रेमवश, ब्रुवन्ति = कह रहे हैं॥ २३॥

**एवमिति**। हे नृप = हे राजन्, एवम् = इत्थम्, परस्परविरोधविवर्धनेन–परस्परम् = अन्योन्यम् यः विरोधः = वैरभावः तस्य विवर्धनम् = प्रवृद्धिः तेन, शीघ्रम् = झटिति, कुरुकुलम् = कौरववंशः, नामशेषम्–नाम्ना = संज्ञया शेषम् = अवशिष्टम्, सर्वस्य विनाशे नाम्नः एवावशिष्टत्वादिति भावः, भवेत् = स्यात्, ( अतः = अस्मात् कारणात् ), भवान् = श्रीमान्, रोषम् = अमर्षम्, अपकृष्य = दूरीकृत्य, तत् = तद्वचनमिति भावः, कर्तुम् = विधातुम्, अर्हति = समर्थो भवति, यत् = यद्वचनम्, त्वाम् = भवन्तम्, युधिष्ठिरमुखाः–युधिष्ठिरः = धर्मपुत्रो युधिष्ठिरः मुखम् = आदिः येषु ते, प्रणयात् = प्रेमभावात्, न तु स्वार्थवशादित्यभिप्रायः, ब्रुवन्ति = कथयन्ति। युधिष्ठिरवचनसम्पादने तवैव कल्याणमिति ध्वनिः। वसन्ततिलका छन्दः॥ २३॥



**अन्वयः**—सहृदयैः, नृपात्मजैः, रिपून्, जित्वा, राज्यं नाम, भुज्यते, लोके, तत्, न, तु,

काङ्क्षा चेन्नृपतित्वमाप्तुमचिरात् कुर्वन्तु ते साहसं
स्वैरं वा प्रविशन्तु शान्तमतिभिर्जुष्टं शमायाश्रमम् ॥२४॥

**वासुदेवः**—भोः सुयोधन ! अलं बन्धुजने परुषमभिधातुम् ।

पुण्यसञ्चयसम्प्राप्तामधिगम्य नृपश्रियम् ।
वञ्चयेद् यः सुहृद्बन्धून् स भवेद् विफलश्रमः ॥ २५ ॥

**दुर्योधनः**—

स्यालं तव गुरोर्भूपं कंसं प्रति न ते दया ।
कथमस्माकमेवं स्यात् तेषु नित्यापकारिषु ॥ २६ ॥

**वासुदेवः**—अलं तन्मद्दोषतो ज्ञातुम् ।

---

याच्यते, वा, न, तु, दीनाय, दीयते; चेत्, नृपतित्वम्, आप्तुम्, कांक्षा, ( स्यात् ), ते, अचिरम्, साहसम्, कुर्वन्तु; वा, शान्तमतिभिः, जुष्टम्, आश्रमम्, शमाय, स्वैरम्, प्रविशन्तु ॥२४॥

**शब्दार्थः**—सहृदयैः = दृढ-हृदय, नृपात्मजैः = राजपुत्रों के द्वारा, रिपून् = शत्रुओं को, जित्वा = जीतकर, राज्यं नाम = राज्य, भुज्यते = भोगा जाता है; लोके = संसार में, तत् = वह, न = न; तु = तो, याच्यते = माँगा जाता है; वा = और, न = न, तु = तो, दीनाय = दीन के लिये, दीयते = दिया ही जाता है; चेत् = यदि, नृपतित्वम् = राजापन को, आप्तुम् = पाने की, कांक्षा = प्रबल इच्छा, ( स्यात् = हो तो ), ते = वे, अचिरम् = शीघ्र ही, साहसम् = साहस, कुर्वन्तु = करें, वा = अन्यथा, शान्तमतिभिः = शान्त विचार वालों के द्वारा, जुष्टम् = सेवित, आश्रमम् = आश्रम में, शमाय = शान्ति के लिये, स्वैरम् = अपनी इच्छा के अनुसार, प्रविशन्तु = प्रवेश करें ॥ २४ ॥

स्वकीयामसन्धेयतां प्रकटयति दुर्योधनः—**राज्यमिति** । सहृदयैः–हृदयेन = दृढचेतसा सहिताः = युक्ताः अथवा प्रशस्तम् = सुपुष्टम् हृदयं येषां ते सहृदयास्तैः, साहसपूर्णैरिति भावः, नृपात्मजैः = राजकुमारैः, रिपून् = शत्रून्, जित्वा = वशीकृत्य, राज्यं नाम = विषयो नाम, भुज्यते = प्राप्यते, शासने आनीयते; लोके = संसारे, तत् = राज्यमित्यर्थः, न = नहि, तु = एव, याच्यते = प्रार्थ्यते, वा = अथवा, न, तु, दीनाय = कातराय, दीयते = समर्प्यते, चेत् = यदि, नृपतित्वम् = नृपतेर्भावो भूपालत्वम्, आप्तुम् = प्राप्तुम्, कांक्षा = अभिलाषा, स्यादिति शेषः, ते = युधिष्ठिरादयः इत्यर्थः, अचिरम् = शीघ्रम्, साहसम् = बलकर्म, कुर्वन्तु = विदधतु, वेति विकल्पे, शान्तमतिभिः–शान्ता = शमं प्राप्ता मतिः = बुद्धिः येषां ते तैः, जुष्टम् = सेवितम् आश्रमम् = अरण्यमिति भावः, शमाय = शान्तिलाभाय, स्वैरम् = यथेच्छम्, प्रविशन्तु = गच्छन्तु । विना युद्धं नाहं किञ्चिदपि दातुमिच्छामीति भावः । शार्दूलविक्रीडितं छन्दः । लक्षणम्—सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥ २४ ॥



**अन्वयः**—यः, पुण्यसञ्चयप्राप्ताम्, नृपश्रियम्, अधिगम्य, सुहृद्बन्धून्, वञ्चयेत्, सः,

यदि राजापन को पाने की प्रबल इच्छा ( हो तो ) वे शीघ्र ही साहस ( अर्थात् युद्ध ) करें, अन्यथा शान्त विचारवालों के द्वारा सेवित आश्रम में शान्ति के लिए, अपनी इच्छानुसार प्रवेश करें ॥ २४ ॥

**वासुदेव**—हे दुर्योधन, बान्धवों के विषय में कठोर बोलना उचित नहीं है ।

जो व्यक्ति पुण्यों के सञ्चय से प्राप्त राजलक्ष्मी को पाकर मित्रों एवं भाई-बन्धुओं को ठगता है, वह व्यर्थ परिश्रमवाला हो जाता है ( अर्थात् उसके सारे श्रम निष्फल हो जाते हैं ) ॥ २५ ॥

**दुर्योधन**—तुम्हारी दया तुम्हारे पिता के साले, राजा कंस के प्रति नहीं थी, ( तो ) इस प्रकार से नित्य ही अपकार करने वाले उन ( पाण्डवों ) के ऊपर हमारी ( दया ) कैसे होगी ? ॥ २६ ॥

**वासुदेव**—उसे मेरा ही दोष नहीं समझना चाहिये ।

---

विफलश्रमः, भवेत् ॥ २५ ॥

**शब्दार्थः**—यः = जो व्यक्ति, पुण्यसञ्चयप्राप्ताम् = पुण्यों के सञ्चय से प्राप्त, नृपश्रियम् = राजलक्ष्मी को, अधिगम्य = पाकर, सुहृद्बन्धून् = मित्रों एवं भाई बन्धुओं को, वञ्चयेत् = ठगता है, सः = वह, विफलश्रमः = व्यर्थ परिश्रमवाला, भवेत् = हो जाता है ॥ २५ ॥

**पुण्यसञ्चयप्राप्तामिति ।** पुण्यानाम् = सुकृतानाम् सञ्चयः = अर्जनमित्यर्थः तेन प्राप्ता = अधिगता ताम् , नृपश्रियम्—नृपस्य = राज्ञः श्रीः = लक्ष्मीः ताम् , अधिगम्य = प्राप्य, सुहृद्बन्धून् = मित्राणि ज्ञातींश्च, वञ्चयेत् = प्रतारयेत्, सः = तादृशो जन इत्यर्थः, विफलश्रमः—विफलः = व्यर्थः श्रमः = अध्यवसायः यस्य सः, भवेत् = स्यात् । बन्धुभिः कृते विरोधे तवैव पराजयः सुनिश्चित इति भावः । अनुष्टुप् छन्दः ॥ २५ ॥

**अन्वयः**—ते, दया, तव, गुरोः, स्यालम् , भूपम् , कंसम् , प्रति, न, ( आसीत् ), एवम् , नित्यापकारिषु, तेषु, अस्माकम् , कथम् , स्यात् ॥ २६ ॥

**शब्दार्थः**—ते = तुम्हारी, दया = दया, तव = तुम्हारे, गुरोः = पिता के, स्यालम् = साले, भूपम् = राजा, कंसम् = कंस के, प्रति = प्रति, न = नहीं, ( आसीत् = थी ); एवम् = इस प्रकार से, नित्यापकारिषु = नित्य ही अपकार करने वाले, तेषु = उन के ऊपर, अस्माकम् = हमारी, कथम् = कैसे, स्यात् = होगी ? ॥ २६ ॥

**स्यालमिति ।** ते = तव, दया = अनुकम्पा, तव = भवतः, गुरोः = तातस्य ( 'गुरू गीष्पति-पित्राद्यौ' इत्यमरः ), स्यालम् = पत्नीभ्रातरम् , तव मातुलमित्यर्थः, भूपम् = राजानम् , कंसम् = एतन्नामानं मथुराधिपतिम् , प्रति, न = नहि, आसीदिति क्रियाशेषः, एवम् = अनेन प्रकारेण, नित्यापकारिषु-नित्यम् = सर्वदा अपकारिषु = अहितकारिषु, अस्माकम् = दुर्योधनादीनामित्यर्थः, कथम् = कथं [illegible], स्यात् = भवेत्, [illegible]ति शेषः । अनुष्टुप् छन्दः ॥ २६ ॥

कृत्वा पुत्रवियोगार्तां बहुशो जननीं मम ।
वृद्धं स्वपितरं बद्ध्वा हतोऽयं मृत्युना स्वयम् ॥ २७ ॥

**दुर्योधनः**—सर्वथा वञ्चितस्त्वया कंसः । अलमात्मस्तवेन । न शौर्यमेतत् । पश्य,

जामातृनाशव्यसनाभितप्ते रोषाभिभूते मगधेश्वरेऽथ ।
पलायमानस्य भयातुरस्य शौर्यं तदेतत् क्व गतं तवासीत् ॥ २८ ॥

**वासुदेवः**—भोः सुयोधन ! देशकालावस्थापेक्षि खलु शौर्यं नयानुगामिनाम् । इह तिष्ठतु तावदस्मद्गतः परिहासः । स्वकार्यमनुष्ठीयताम् ।

कर्तव्यो भ्रातृषु स्नेहो विस्मर्तव्या गुणेतराः ।
सम्बन्धो बन्धुभिः श्रेयान् लोकयोरुभयोरपि ॥ २९ ॥

---

**अन्वयः**—मम, जननीम्, बहुशः, पुत्रवियोगार्ताम्, कृत्वा, वृद्धम्, स्वपितरम्, बद्ध्वा, अयम्, मृत्युना, स्वयम्, हतः ॥ २७ ॥

**शब्दार्थः**—मम = मेरी, जननीम् = माँ को, बहुशः = कई बार, पुत्रवियोगार्ताम् = पुत्रों के वियोग से पीडित, कृत्वा = करके, वृद्धम् = वृद्ध, स्वपितरम् = अपने पिता को, बद्ध्वा = बन्दी बनाकर, अयम् = यह, मृत्युना = मृत्यु के द्वारा, स्वयम् = खुद, हतः = मारा गया ॥ २७ ॥

कृष्णः कंसस्य दण्डार्हतां प्रतिपादयन्नाह-**कृत्वेति** । मम = कृष्णस्येत्यर्थः, जननीम् = मातरम्, बहुशः = अनेकशः, पुत्रवियोगार्ताम्–पुत्राणाम् = सुतानाम् वियोगेन = विरहेण आर्ताम् = पीडिताम्, कृत्वा = विधाय, वृद्धम् = जरसाभिभूतम्, स्वपितरम् = स्वजनकम्, बद्ध्वा = संयम्य, कारागारे, निक्षिप्येत्यर्थः, अयम् = तवेप्सितः कंसः, मृत्युना = कालेन, स्वयम् = न तु मयेत्यर्थः, हतः = घातितः । अनुष्टुप् छन्दः ॥ २७ ॥

**अन्वयः**—अथ, जामातृनाशव्यसनाभितप्ते, रोषाभिभूते, मगधेश्वरे, भयातुरस्य, पलायमानस्य, तव, तदेतत्, शौर्यम्, क्व, गतम्, आसीत् ॥ २८ ॥

**शब्दार्थः**—अथ = अच्छा, जामातृनाशव्यसनाभितप्ते = दामाद की मृत्यु के दुःख से संतप्त, रोषाभिभुते = अत्यन्त क्रुद्ध, मगधेश्वरे = मगध के अधिपति के विषय में, भयातुरस्य = भयभीत, पलायमानस्य = भागते हुये, तव = तुम्हारी, तदेतत् = वह यह, शौर्यम् = शूरता, क्व = कहाँ, गतम् = चली गई, आसीत् = थी ? ॥ २८ ॥

**जामातृनाशेति** । अथेति स्वीकृतौ, जामातृनाशेत्यादिः—जामातुः = पुत्र्याः पत्युः नाशः = घातनम् स एव व्यसनम् = दुःखम् तेन अभितप्ते = भृशं पीडिते, रोषाभिभूते—रोषेण—कोपेन अभिभूते = आक्रान्ते तस्मिन्, मगधेश्वरे—मगधानाम् = मगधजनानाम् ईश्वरे = अधिपतौ, भयातुरस्य–भयेन = भीत्या आतुरस्य = पीडितस्य, पलायमानस्य = वेगेनापसरतः, तव = भवतः, तदेतत् =

मेरी माँ को कई बार पुत्रों के वियोग से पीडित करके, वृद्ध अपने पिता ( उग्रसेन ) को बन्दी बना कर यह मृत्यु के द्वारा स्वयं मारा गया ॥ २७ ॥

**दुर्योधन**—कंस को तुमने सब तरह से धोखा दिया । अपनी प्रशंसा बन्द करो । यह शूरता नहीं है । देखो,

अच्छा, ( अपने ) दामाद ( कंस ) की मृत्यु के दुःख से संतप्त, अत्यन्त क्रुद्ध, मगध के अधिपति ( जरासन्ध ) के विषय में भयभीत ( अतः ) भागते हुये तुम्हारी वह यह शूरता कहाँ चली गई थी ? ॥ २८ ॥

**वासुदेव**—हे दुर्योधन, नीति का अनुसरण करने वालों की शूरता भी देश, काल तथा अवस्था के अनुसार होती है । अच्छा, अब हमारे विषय की मजाक यहीं रहने दो, अपना कार्य करो ।

भाइयों के ऊपर स्नेह करना चाहिये ( तथा उनकी ) गलतियाँ भुला देनी चाहिये । भाइयों के साथ ( सुन्दर ) सम्बन्ध दोनों भी लोकों में कल्याणकारी होता है ॥ २९ ॥

---

असावित्यर्थः, शौर्यम् = शूरता, क्व = कुत्र, गतम् = प्रव्रजितम्, आसीत् = अभूत् । यदि शौर्यं ते रोचते तर्हि पराक्रमकाले पलायनं कथमङ्गीकृतमिति प्रश्नाभिप्रायः । उपजातिश्छन्दः ॥ २८ ॥

**वासुदेव इति** । देशकालावस्थापेक्षि—देशश्च = अधिष्ठितस्थानं च, कालश्च = समयश्च अवस्था च = दशा चेति ता अपेक्षितुं शीलं यस्य तत्, शौर्यम् = शूरता, नयानुगामिनाम्—नयम् = नीतिम् अनुगच्छन्तीति = अनुसरन्तीति तेषाम् । अस्मद्गतः = मद्विषयकः ॥

**अन्वयः**—भ्रातृषु, स्नेहः, कर्तव्यः, गुणेतराः, विस्मर्तव्याः, बन्धुभिः, सम्बन्धः, उभयोः, अपि, लोकयोः, श्रेयान्, ( भवति ) ॥ २९ ॥

**शब्दार्थः**—भ्रातृषु = भाइयों के ऊपर, स्नेहः = स्नेह, कर्तव्यः = करना चाहिये, गुणेतराः = गलतियाँ, विस्मर्तव्याः = भुला देनी चाहिये, बन्धुभिः = भाइयों के साथ, सम्बन्धः = सम्बन्धः, उभयोः = दोनों, अपि = भी, लोकयोः = लोकों में, श्रेयान् = कल्याणकारी, ( भवति = होता है ) ॥ २९ ॥

**कर्तव्य इति** । भ्रातृषु = बन्धुषु, स्नेहः = अनुरागः, कर्तव्यः = विधेयः, गुणेतराः—गुणेभ्यः = सद्गुणेभ्यः इतराः = भिन्नाः, दोषा इति यावत्, विस्मर्तव्याः = विस्मर्तुं योग्याः, उपेक्षणीयाः इत्यर्थः, बन्धुभिः = भ्रातृभिः, सम्बन्धः = समीचीनो व्यवहारः, उभयोः = द्वयोः, अपि = च, लोकयोः = भुवनयोः स्वर्गभूलोकयोरित्यर्थः, श्रेयान् = हितकारी, भवतीति शेषः । अतो बन्धुषु अनुरागः कर्तव्य इति भावः । अनुष्टुप् छन्दः ॥ २९ ॥

**दुर्योधनः**—

देवात्मजैर्मनुष्याणां कथं वा बन्धुता भवेत् ।
पिष्टपेषणमेतावत् पर्याप्तं छिद्यतां कथा ॥ ३० ॥

**वासुदेवः**—( आत्मगतम् )

प्रसाद्यमानः साम्नायं न स्वभावं विमुञ्चति ।
हन्त संक्षोभयाम्येनं वचोभिः परुषाक्षरैः ॥ ३१ ॥

( प्रकाशम् ) भोः सुयोधन ! किं न जानीषेऽर्जुनस्य बलपराक्रमम् ।

**दुर्योधनः**—न जाने ।

**वासुदेवः**—भोः ! श्रूयतां,

कैरातं वपुरास्थितः पशुपतिर्युद्धेन संतोषितो
वह्नेः खाण्डवमश्नतः सुमहती वृष्टिः शरैश्छादिता ।
देवेन्द्रार्तिकरा निवातकवचा नीताः क्षयं लीलया
नन्वेकेन तदा विराटनगरे भीष्मादयो निर्जिताः ॥ ३२ ॥

---

**अन्वयः**—मनुष्याणाम्, देवात्मजैः, कथं वा, बन्धुता, भवेत्; एतावत्, पिष्टपेषणम्, पर्याप्तम्; कथा, छिद्यताम् ॥ ३० ॥

**शब्दार्थः**—मनुष्याणाम्=मनुष्यों का, देवात्मजैः=देव-पुत्रों के साथ, कथं वा=किस तरह से, बन्धुता=बन्धुभाव, भवेत्=होगा? एतावत्=इतना, पिष्टपेषणम्=पिसे हुये को पीसना, पर्याप्तम्=काफी है, कथा=सन्धि-वार्ता, छिद्यताम्=समाप्त की जाय ॥ ३० ॥

**देवात्मजैरिति** । मनुष्याणाम्=मानवानाम्, देवात्मजैः—देवानाम्=यम-वायु-देवेन्द्राश्विकुमाराणां त्रिदशानाम्, आत्मजाः=पुत्राः तैः, कथं वा=केन प्रकारेण, बन्धुता=बन्धुभावः, भवेत्=स्यात्? समानशीलव्यसनेषु सख्यमित्युक्तदिशा देवैः सह मानवानां मैत्री कथमपि सुसङ्गता न भविष्यतीति भावः । एतावत्=इयन्मात्रम्, पिष्टपेषणम्–पिष्टस्य=चूर्णस्य पेषणम्–चूर्णीकरणम्, निरर्थकं कार्यमित्यर्थः, पर्याप्तम्=अलम्; कथा=सन्धि-वार्ता, छिद्यताम्=समाप्यताम् । अनुष्टुप् छन्दः ॥ ३० ॥

**अन्वयः**—अयम्, साम्ना, प्रसाद्यमानः, स्वभावम्, न, विमुञ्चति; हन्त ! एनम्, परुषाक्षरैः, वचोभिः, संक्षोभयामि ॥ ३१ ॥

**शब्दार्थः**—अयम्=यह, साम्ना=साम ( नीति ) से, प्रसाद्यमानः=मनाया जाता हुआ, स्वभावम्=स्वभाव को, न=नहीं, विमुञ्चति=छोड़ रहा है; हन्त=ओह, एनम्=इसको, परुषाक्षरैः=कठोर अक्षरों वाले, वचोभिः=वचनों से, संक्षोभयामि=उद्विग्न करता हूँ ॥ ३१ ॥

**प्रसाद्यमान इति** । अयम्=एष दुर्योधनः, साम्ना=शान्तिनीत्या, प्रसाद्यमानः=सन्तोष्यमाणः, स्वभावम्=स्वकीयां प्रकृतिम्, न विमुञ्चति=न परित्यजति; हन्तेति खेदेऽव्ययम्, एनम्=अमुम्, परुषाक्षरैः=परुषाणि=कठोराणि अक्षराणि येषु तानि तैः, वचोभिः=वचनैः, संक्षोभयामि=उद्वेजयामि । अनुष्टुप् छन्दः ॥ ३१ ॥

मनुष्यों का देव-पुत्रों के साथ किस तरह से बन्धु-भाव होगा ? इतना पिसे हुये को पीसना ( अर्थात् व्यर्थ श्रम ) काफी है। ( अब ) सन्धि-वार्ता समाप्त की जाय ॥ ३० ॥

**विशेष—देवात्मजैः**—युधिष्ठिर आदि देवों के वीर्य से कुन्ती एवं माद्री से पैदा हुये थे। पीछे इसका वर्णन हो चुका है ॥ ३० ॥

**वासुदेव**—( अपने आप )

यह ( दुर्योधन )—साम ( नीति ) से मनाया जाता हुआ स्वभाव को नहीं छोड़ रहा है। ओह ! इसको ( अब ) कठोर अक्षरोंवाले वचनों से उद्विग्न करूँगा ॥ ३१ ॥

( प्रकट रूप से ) हे दुर्योधन, अर्जुन के बल एवं पराक्रम को क्या नहीं जानते हो ?

**दुर्योधन**—नहीं जानता हूँ।

**वासुदेव**—हे, ( दुर्योधन, तब ) सुनो—

बहेलिया के शरीर को धारण किये हुए शङ्कर युद्ध के द्वारा सन्तुष्ट किए गये थे। खाण्डव ( वन ) को जलाते हुये अग्नि को ( बुझाने वाली ) घनघोर वर्षा बाणों से ढँक दी गई। देवराज इन्द्र को पीडित करने वाले निवात-कवच ( राक्षस ) खेल में ही विनाश को पहुँचा दिये गये। निश्चय ही अकेले ( अर्जुन ) ने उस समय विराट की नगरी में भीष्म आदि को जीत लिया था ॥ ३२ ॥

---

**अन्वयः**—कैरातम्, वपुः, आस्थितः, पशुपतिः, युद्धेन, सन्तोषितः; खाण्डवम्, अश्नतः, वह्नेः, ( उपशामिका ), सुमहती, वृष्टिः, शरैः, छादिता; देवेन्द्रार्तिकराः, निवातकवचाः, लीलया, क्षयम्, नीताः; ननु, एकेन, तदा, विराटनगरे, भीष्मादयः निर्जिताः ॥ ३२ ॥

**शब्दार्थः**—कैरातम् = बहेलिया के, वपुः = शरीर को, आस्थितः = धारण किये हुये, पशुपतिः = शङ्कर, युद्धेन = युद्ध के द्वारा, सन्तोषितः = सन्तुष्ट किये गये थे; खाण्डवम् = खाण्डव ( वन ) को, अश्नतः = जलाते हुये, वह्नेः = अग्नि को, ( उपशामिका = बुझानेवाली ) सुमती = घनघोर, वृष्टिः = वर्षा, शरैः = बाणों से, छादिता = ढँक दी गई, देवेन्द्रार्तिकराः = देवराज इन्द्र को पीडित करने वाले, निवातकवचाः = निवात-कवच ( राक्षस ), लीलया = खेल में ही, क्षयम् = विनाश को, नीताः = पहुँचा दिये गये, ननु = निश्चय ही, एकेन = अकेले ( अर्जुन ) ने, तदा = उस समय, विराटनगरे = विराट की नगरी में, भीष्मादयः = भीष्म आदि को, निर्जिताः = जीत लिया था ॥ ३२ ॥

अर्जुनस्याद्भुतं पराक्रमं वर्णयन् कथयति श्रीकृष्णः—**कैरातमिति**। कैरातम्—किरातस्य = शबरस्य ( 'किरातशबराः पुलिन्दाः म्लेच्छजातयः' इत्यमरः ) इदं कैरातम् = शावरम्, वपुः = शरीरम्, आस्थितः = वर्तमानः, पशुपतिः = शङ्करः, युद्धेन = संग्रामेण, सन्तोषितः = सन्तर्पितः; खाण्डवम् = खाण्डववनम्, अश्नतः = भुञ्जतः, दहत इत्यर्थः, वह्नेः = अग्नेः, ( उपशामिका = विनाशिका ), सुमहती = प्रबला, वृष्टिः = जलवर्षणम्, शरैः = बाणैः, छादिता = संछाद्य निवारिता; देवेन्द्रार्तिकराः = देवेन्द्रस्य आर्तिम् [illegible] देवेन्द्रार्तिकराः, निवातकवचाः = एतान्नामकाः राक्षसाः, लीलया = क्रीडया, अनायासेनेत्यर्थः, क्षयम् = विनाशम्,

अपि च, तवापि प्रत्यक्षमपरं कथयामि ।

ननु त्वं चित्रसेनेन नीयमानो नभस्तलम् ।
विक्रोशन् घोषयात्रायां फाल्गुनेनैव मोचितः ॥ ३३ ॥

किं बहुना,

दातुमर्हसि मद्वाक्याद् राज्यार्धं धृतराष्ट्रज ! ।
अन्यथा सागरान्तां गां हरिष्यन्ति हि पाण्डवाः ॥ ३४ ॥

**दुर्योधनः**—कथं कथम् ? हरिष्यन्ति हि पाण्डवाः ।

प्रहरति यदि युद्धे मारुतो भीमरूपी
प्रहरति यदि साक्षात् पार्थरूपेण शक्रः ।
परुषवचनदक्ष ! त्वद्वचोभिर्न दास्ये
तृणमपि पितृभुक्ते वीर्यगुप्ते स्वराज्ये ॥ ३५ ॥

---

नीताः = प्रापिताः; नन्विति निश्चये, एकेन = अद्वितीयेन, अर्जुनेनेति शेषः, तदा = तस्मिन् काले, विराटगोहरणकाले इत्यर्थः, विराटनगरे = विराटराजस्य नगर्याम् , भीष्मादयः = गाङ्गेयप्रभृतयः, निर्जिताः = पराजिताः । एतादृशमर्जुनं भीष्मादिबलेन कथं जेतुमिच्छसीति प्रश्नो गर्भे । शार्दूलविक्रीडितं छन्दः । छन्दोलक्षणम्—'सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' ॥ ३२ ॥

**अन्वयः**—घोषयात्रायाम्, चित्रसेनेन, नभस्तलम् , नीयमानः, विक्रोशन् , त्वम्, ननु, फाल्गुनेन, एव, मोचितः ॥ ३३ ॥

**शब्दार्थः**—घोषयात्रायाम् = अहीरों की यात्रा ( जुलूस ) के समय, चित्रसेनेन = चित्रसेन के द्वारा, नभस्तलम् = आकाश तल में, नीयमानः = पकड़कर ले जाये जाते हुए, विक्रोशन् = चिल्लाते हुये, त्वम् = तुम, ननु = अरे, फाल्गुनेन = अर्जुन के द्वारा, एव = ही, मोचितः = छुड़ाये गये थे ॥ ३३ ॥

**ननु त्वमिति**। घोषयात्रायाम्–घोषाणाम् = आभीराणाम् यात्रा = सामूहिकं गमनं तस्याम् , चित्रसेनेन = चित्रसेननामकेन गन्धर्वेण, नभस्तलम् = आकाशतलम् , नीयमानः = बलात् आकृष्यमाणः, विक्रोशन् = विलापं कुर्वन् , त्वम् = भवान् , नन्वित्युन्मुखीकरणे, फाल्गुनेन = अर्जुनेन, एवेत्यन्ययोगव्यवच्छेदार्थम् , मोचितः = स्वातन्त्र्यं नीतः । अनुष्टुप् छन्दः ॥ ३३ ॥

**अन्वयः**—हे धृतराष्ट्रज, मद्वाक्यात्, राज्यार्धम्, दातुम्, अर्हसि, अन्यथा, हि पाण्डवाः, सागरान्ताम्, गाम्, हरिष्यन्ति ॥ ३४ ॥

**शब्दार्थः**—हे धृतराष्ट्रज = हे धृतराष्ट्र के पुत्र, मद्वाक्यात् = मेरे कहने से, राज्यार्धम् = राज्य का आधा भाग, दातुम् = देने में, अर्हसि = योग्य हो, अन्यथा = नहीं तो, हि = निश्चय ही, पाण्डवाः = पाण्डव, सागरान्ताम् = समुद्रपर्यन्त, गाम् = पृथिवी को, हरिष्यन्ति = बलपूर्वक छीन लेंगे ॥ ३४ ॥



**दातुमिति**। हे धृतराष्ट्रज = हे धृतराष्ट्रपुत्र, [illegible] मद्वाक्यात् = मम कथनात्, राज्यार्धम् = अर्धराज्यम् , दातुम् = अर्पयितुम् , अर्हसि = योग्योऽसि;

और भी, तुम्हारे सामने की दूसरी ( बात ) कहता हूँ।

अहीरों की यात्रा ( जुलूस ) के समय चित्रसेन ( नामक गन्धर्व ) के द्वारा आकाश-तल में पकड़ कर ले जाये जाते हुये, चिल्लाते हुये, तुम अरे, अर्जुन के द्वारा ही छुड़ाये गये थे ॥३३॥

अधिक क्या ( कहूँ )—

हे धृतराष्ट्र के पुत्र ( दुर्योधन ), मेरे कहने से राज्य का आधा भाग देने में योग्य हो ( अर्थात् मेरे कहने से तुम राज्य का आधा भाग दे दो )। नहीं तो, निश्चय ही, पाण्डव समुद्रपर्यन्त पृथिवी को बलपूर्वक छीन लेंगे ॥ ३४ ॥

**दुर्योधन**—क्या-क्या ? पाण्डव लोग बलपूर्वक छीन लेंगे।

हे कर्कश वचन बोलने में प्रवीण ( वासुदेव ), यदि भीम के रूप में स्थित वायु ( मेरे ऊपर ) प्रहार करता है, यदि अर्जुन के रूप से साक्षात् इन्द्र प्रहार करता है, ( तो भी ) तुम्हारे कहने से पिता के द्वारा भोगे गये, बलपूर्वक रक्षित अपने राज्य में ( एक ) तिनका भी नहीं दूँगा ॥ ३५ ॥

---

अन्यथा = इतरथा, होति निश्चये, पाण्डवाः = युधिष्ठिरादयः, सागरान्ताम्—सागरः = समुद्रः अन्तः = सीमा यस्याः सा ताम्, गाम् = महीम् ( 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयी च वाणादिवाग्भूष्वप्सु भूम्नि च ॥' इति मेदिनी ), हरिष्यन्ति = बलाद् ग्रहीष्यन्ति। अनुष्टुप् छन्दः ॥ ३४ ॥

**अन्वयः**—हे परुषवचनदक्ष, यदि, युद्धे, भीमरूपी, मारुतः, प्रहरति, यदि, पार्थरूपेण, साक्षात्, शक्रः, प्रहरति; ( तदापि ), त्वद्वचोभिः, पितृभुक्ते, वीर्यगुप्ते, स्वराज्ये, तृणम्, अपि, न, दास्ये ॥ ३५ ॥

**शब्दार्थः**—हे परुषवचनदक्ष = हे कर्कश वचन बोलने में प्रवीण, यदि = यदि, भीमरूपी = भीम के रूप में स्थित, मारुतः = वायु, प्रहरति = प्रहार करता है, यदि पार्थरूपेण = अर्जुन के रूप से, साक्षात् = प्रत्यक्षं, शक्रः = इन्द्र, प्रहरति = प्रहार करता है, ( तदापि = तो भी ), त्वद्वचोभिः = तुम्हारे कहने से, पितृभुक्ते = पिता के द्वारा भोगे गये, वीर्यगुप्ते = बलपूर्वक रक्षित, स्वराज्ये = अपने राज्ये में, तृणम् = तिनका, अपि = भी, न = नहीं, दास्ये = दूँगा ॥ ३५ ॥

**प्रहरतीति।** हे परुषवचनदक्ष—परुषाणि = कठोराणि यानि वचनानि = वाक्यानि तेषु दक्षः = प्रवीणः तत्सम्बुद्धौ, यदि = चेत्, युद्धे = संग्रामे, भीमरूपी = वृकोदररूपधारी, मारुतः = वायुः, प्रहरति = प्रहारं करोति; यदि = चेत्, पार्थरूपेण = अर्जुनरूपेण, साक्षात् = प्रत्यक्षम्, शक्रः = इन्द्रः, प्रहरति = अभिघातं करोति, मयीति शेषः, ( तदापि = तस्यामवस्थायामपीति ), त्वद्वचोभिः = तव वाक्यैः, पितृभुक्ते—पित्रा = जनकेन, धृतराष्ट्रेणेत्यर्थः, भुक्ते = सेविते, शासिते इत्यर्थः, अनेन स्वस्यैवाधिकारो दर्शितः, वीर्यगुप्ते—वीर्येण = बलेन गुप्ते = रक्षिते, स्वराज्ये = स्वराष्ट्रे, तृणम् = घासम्, किञ्चिन्मात्रमित्यर्थः, स्वल्पांशमिति यावत्, अपि = च, न = नहि, दास्ये = दास्यामि। भयेन नाहं तृणमपि प्रदास्ये इति भावः। मालिनी छन्दः। तल्लक्षणम्— 'ननमयययुतेयं मालिनी भोगिलोकैः' ॥ ३५ ॥

**वासुदेवः**—भोः कुरुकुलकलङ्कभूत ! अयशोलुब्ध ! वयं किल तृणान्तराभिभाषकाः ।

**दुर्योधनः**—भो गोपालक ! तृणान्तराभिभाष्यो भवान् ।

> **अवध्यां प्रमदां हत्वा हयं गोवृषमेव च ।**
> **मल्लानपि सुनिर्लज्जो वक्तुमिच्छसि साधुभिः ॥ ३६ ॥**

**वासुदेवः**—भोः सुयोधन ! ननु क्षिपसि माम् ।

**दुर्योधनः**—आः, अभाष्यस्त्वम् ।

> **अहमवधृतपाण्डरातपत्रो द्विजवरहस्तधृताम्बुसिक्तमूर्धा ।**
> **अवनतनृपमण्डलानुयात्रैः सह कथयामि भवद्भिर्न भाषे ॥ ३७ ॥**

**वासुदेवः**—न व्याहरति किल मां सुयोधनः । भोः !

---

**विशेष—तृणान्तराभिभाषकाः**—अच्छे एवं श्रेष्ठ व्यक्ति ओछे एवं नीच व्यक्तियों के साथ साक्षात् बात न कर बीच में एक तृण का ओट करके बातचीत किया करते थे । सीता ने अशोक वाटिका में रावण के साथ बात करते समय तिनके का ओट किया था—'तृण धरि ओट कहति वैदेही ।' मानस, 'तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत ।' रामायण ।

**वासुदेव इति ।** तृणान्तराभिभाषकाः—तृणेन = घासपत्रेण अन्तरम् = व्यवधानम् येषां अभिभाष्येण सह ते तृणान्तराः, तृणान्तराः सन्तोऽभिभाषकाः तृणान्तराभिभाषकाः । तृणमन्तरतः कृत्वैव त्वमस्माकम् अभिभाष्यो न साक्षादित्यभिप्रायः, इति गणपतिशास्त्रिणः । पुरातने काले आसीदेतादृशी परिपाटी यदुत्तमा अधमान् प्रति भाषणकाले अन्तरे तृणं धृत्वैवाभाषन्तेति ॥

**अन्वयः**—अवध्याम्, प्रमदाम्, हयम्, गोवृषम्, एव, च, मल्लान्, अपि, हत्वा, सुनिर्लज्जः, ( त्वम् ), साधुभिः, वक्तुम्, इच्छसि ॥ ३६ ॥

**शब्दार्थः**—अवध्याम् = वध करने अयोग्य, प्रमदाम् = स्त्री को, हयम् = घोड़े को, गोवृषम् = बैल को, एव = यह पादपूर्ति के लिये आया है, च = तथा, मल्लान् = मल्लों ( पहलवानों ) को, अपि = भी, हत्वा = मारकर, सुनिर्लज्जः = महान् निर्लज्ज, ( त्वम् = तुम ), साधुभिः = सज्जनों के साथ, वक्तुम् = बात करना, इच्छसि = चाहते हो ॥ ३६ ॥

कृष्णकर्मणोऽप्राशस्त्यं वक्ति—**अवध्यामिति** । अवध्याम् = वधानर्हाम्, 'अहिंस्यां प्रमदामाहुः सर्वधर्मेषु पार्थिव ।' इति भारतोक्तिः, प्रमदाम् = स्त्रियम्, पूतनामिति यावत्, हयम् = अश्वम्, हयरूपधारिणं केशिनमिति, गोवृषम्—प्रशस्तः गौः गोवृषः = श्रेष्ठो गौः तम्, वृषभविग्रहमरिष्टमिति, एवेति पादपूर्तौ, च = तथा, मल्लान् = मुष्टिचाणूरान्, अपि = च, हत्वा = विनाश्य, सुनिर्लज्जः = अत्यंत लज्जाविरहितः, त्वमिति शेषः, साधुभिः = सज्जनैः सह, वक्तुम् = आलपितुम्, इच्छसि = वाञ्छसि ? त्वया सह अस्माकं राज्ञामालपनमपि गर्हितमिति गर्भितोऽर्थः । अनुष्टुप् छन्दः ॥ ३६ ॥

**अन्वयः**—अवधृतपाण्डरातपत्रः, द्विजवरहस्तधृताम्बुसिक्तमूर्धा, अहम्, अवनतनृपमण्डलानुयात्रैः, भवद्भिः, सह, न, भाषे, ( इति ), कथयामि ॥ ३७ ॥

**वासुदेव**—हे कुरुवंश के कलङ्कभूत ! अपयश के लोभी ( दुर्योधन ) ! निश्चय ही हम लोग बीच में तृण रखकर ( तुम्हारे साथ ) बात करनेवाले हैं ।

**दुर्योधन**—हे छोटे से अहीर, आप ( ही ) बीच में तृण रखकर बात करने के पात्र हैं । ( अर्थात् आपके ही साथ हमें तृण रखकर बात करनी चाहिये ) ।

वध के अयोग्य स्त्री को, घोड़े एवं बैल को तथा मल्लों ( पहलवानों ) को भी मार-कर महान् निर्लज्ज ( तुम ) सज्जनों के साथ बात करना चाहते हो ? ॥ ३६ ॥

**विशेष—प्रमदाम्**—कृष्ण ने बचपन में पूतना का वध किया था । स्त्रियों का वध वर्जित है । उसी की ओर यहाँ सङ्केत है ।

**हयं गोवृषमेव च**—केशी एवं अरिष्ट नामक राक्षसों ने क्रमशः घोड़े तथा बैल का रूप धारण किया था । कृष्ण ने इनका वध किया था । घोड़े एवं बैल का वध भी प्रशस्त नहीं कहा गया है ।

**मल्लान्**—कृष्ण जब कंस की सभा में प्रवेश किये तब उन्होंने कंस के पहलवानों-चाणूर आदि का वध किया था ॥ ३६ ॥

**वासुदेव**—हे दुर्योधन, मेरी निन्दा कर रहे हो ?

**दुर्योधन**—ओह ! तुम बात करने लायक ( भी ) नहीं हो ।

श्वेत च्छत्र को धारण करनेवाला, श्रेष्ठ ब्राह्मणों के हाथों में धारण किये गये जल से अभिषिक्त शिरवाला मैं ( अपने अधीन अतः ) झुके हुये राज-समूह के सेवक आप जैसों के साथ नहीं बात करता हूँ—( यह ) कह रहा हूँ ॥ ३७ ॥

**वासुदेव**—दुर्योधन मुझसे नहीं बोल रहा है । हे,

---

**शब्दार्थः**—अवधृतपाण्डरातपत्रः = श्वेत छत्र को धारण करनेवाला, द्विजवरहस्तधृताम्बु-सिक्तमूर्धा = श्रेष्ठ ब्राह्मणों के हाथों में धारण किये गये जल से अभिषिक्त शिरवाला, अहम् = मैं, अवनतनृपमण्डलानुयात्रैः = ( अपने अधीन अतः ) झुके हुये राज-समूह के सेवक, भव-द्विधैः = आप जैसों के, सह = साथ, न = नहीं, भाषे = बात करता हूँ, ( इति = यह ), कथ-यामि = कह रहा हूँ ॥ ३७ ॥

**अहमिति** । अवधृतपाण्डरातपत्रः—अवधृतम् = राजलक्ष्मरूपेण गृहीतम् पाण्डरम् = धवलम् आतपत्रम् = छत्रम् येन तादृशः, द्विजवराणाम् = ब्राह्मणश्रेष्ठानाम् हस्ताभ्याम् = करा-भ्याम् धृतम् = गृहीतम् यदम्बु = जलम् तेन सिक्तः = अभिषिक्तः मूर्धा = शिरः यस्य सः तादृशः, अहम् = दुर्योधनः, अवनतनृपमण्डलानुयात्रैः—अवनतस्य = मम समक्षं नम्रीभूतस्य नृपमण्ड-लस्य = राजसमूहस्य अनुयात्रैः = अनुयायिभिः, भृत्यैरित्यर्थः, भवद्विधैः = त्वत्सदृशैः, सह = साकम्; न भाषे = न ब्रवीमि, ( इति = एतत् ), कथयामि = वच्मि ; पुष्पिताग्रा वृत्तम् । तल्लक्षणम्—'अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' ॥ ३७ ॥

शठ ! बान्धवनिःस्नेह ! काक ! केकर ! पिङ्गल !
त्वदर्थात् कुरुवंशोऽयमचिरान्नाशमेष्यति ॥ ३८ ॥

भो भो राजानः ! गच्छामस्तावत् ।

**दुर्योधनः**—कथं यास्यति किल केशवः । दुःशासन ! दुर्मर्षण । दुर्मुख ! दुर्बुद्धे ! दुष्टेश्वर ! दूतसमुदाचारमतिक्रान्तः केशवो बध्यताम् । कथमशक्ताः । दुःशासन ! न समर्थः खल्वसि ।

करितुरगनिहन्ता कंसहन्ता स कृष्णः
पशुपकुलनिवासादानुजीव्यानभिज्ञः ।
हतभुजबलवीर्यः पार्थिवानां समक्षं
स्ववचनकृतदोषो बध्यतामेष शीघ्रम् ॥ ३९ ॥

अयमशक्तः । मातुल ! बध्यतामयं केशवः । कथं पराङ्मुखः पतति । भवतु, अहमेव पाशैर्बध्नामि । ( उपसर्पति । )

**वासुदेवः**—कथं बद्धुकामो मां किल सुयोधनः । भवतु, सुयोधनस्य सामर्थ्यं पश्यामि । ( विश्वरूपमास्थितः । )

**दुर्योधनः**—भो दूत !

---

**अन्वयः**—हे शठ, बान्धवनिःस्नेह, काक, केकर, पिङ्गल, त्वदर्थात्, अयम्, कुरुवंशः, अचिरात्, नाशम्, एष्यति ॥ ३८ ॥

**शब्दार्थः**—हे शठ = हे धृष्ट, बान्धवनिःस्नेह = भाई-बन्धुओं के प्रति स्नेहरहित, काक = कौवा, केकर = भैंची आँखवाला, पिङ्गल = बन्दर, त्वदर्थात् = तुम्हारे कारण, अयम् = यह, कुरुवंशः = कुरुकुल , अचिरात् = शीघ्र ही, नाशम् = विनाश को, एष्यति = प्राप्त करेगा ॥३८॥

**शठेति ।** हे शठ = हे धृष्ट, बान्धवनिःस्नेह—बान्धवेषु = स्वजनेषु निःस्नेहः = निर्दयः तत्सम्बुद्धौ, काक = ध्वांक्ष, ध्वांक्षवत् कुत्सित इत्यर्थः, केकर = वलिर, वक्रलोचन, ( 'वलिरः केकरे' इत्यमरः ), पिङ्गल = मर्कट, त्वदर्थात् = तव कारणात्, अयम् = एषः, कुरुवंशः = कौरवकुलम् , अचिरात् = शीघ्रम् , नाशम् = ध्वंसम्, एष्यति = प्राप्स्यति । तव कारणादेतत् कुलं झटिति विनाशमनुभविष्यतीति भावः । अनुष्टुप् छन्दः ॥ ३८ ॥

**अन्वयः**—करितुरगनिहन्ता, कंसहन्ता, पशुपकुलनिवासात्, आनुजीव्यानभिज्ञः, हतभुजबलवीर्यः, पार्थिवानाम्, समक्षम्, स्ववचनकृतदोषः, सः, एषः, कृष्णः, शीघ्रम्, बध्यताम् ॥३९॥

**शब्दार्थः**—करितुरगनिहन्ता = हाथी-घोड़ों को मारनेवाला, कंसहन्ता = कंस का विनाशक, पशुपकुलनिवासात् = ग्वालों के कुल में निवास होने से, आनुजीव्यानभिज्ञः = दूत के कार्य को न जाननेवाला, हतभुजबलवीर्यः = भुजाओं के बल एवं पराक्रम से रहित, पार्थिवानाम् = राजाओं के, समक्षम् = सामने, स्ववचनकृतदोषः = अपने वचनों से ( मेरा ) अपराध करने वाला, सः = वह, एषः = यह, कृष्णः = कृष्ण, शीघ्रम् = शीघ्र ही, बध्यताम् = बाँध लिया जाय ॥ ३९ ॥

हे शठ, भाई-बन्धुओं के प्रति स्नेह-रहित, कौवा, बैंची आँखवाला, बन्दर, तुम्हारे कारण यह कुरु-कुल शीघ्र ही विनाश को प्राप्त करेगा ॥ ३८ ॥

हे हे राजाओं, अब जा रहा हूँ।

**दुर्योधन**—क्या केशव चला ही जायगा? दुःशासन, दुर्मर्षण, दुर्मुख, दुर्बुद्धे, दुष्टेश्वर, दूत की मर्यादा का उल्लंघन करनेवाला केशव बाँध लिया जाय। क्या ( इसे बाँधने में तुम लोग ) अशक्त हो? दुःशासन, ( तुम भी इसे बाँधने में ) नहीं समर्थ हो?

हाथी-घोड़ों को मारने वाला, कंस का विनाशक, ग्वालों के कुल में निवास होने से दूत के कार्य को न जाननेवाला ( अथवा कोर्ट की मर्यादा को न जाननेवाला ), भुजाओं के बल एवं पराक्रम से रहित, राजाओं के सामने अपने वचनों से ( मेरा अपमानरूप ) अपराध करने वाला यह कृष्ण शीघ्र ही बाँध लिया जाय ॥ ३९ ॥

**विशेष—करितुरगनिहन्ता**—कंस का अत्यन्त मदमत्त हाथी था 'कुवलयापीड'। महावत ने उस हाथी से कृष्ण को कुचलवा डालना चाहा। कृष्ण ने पटक कर कुवलयापीड का वध कर डाला था। 'केशी' नामक राक्षस घोड़े का रूप धारण कर कृष्ण को छलना चाहा था। कृष्ण ने इसका भी वध किया था। वृन्दावन का केशीघाट आज भी इसका स्मारक है ॥ ३९ ॥

यह ( भी पकड़ने में ) असमर्थ है। मामा ( शकुनि जी ), यह केशव बाँध लिया जाय। क्या ( शकुनि भी ) लौट कर गिर रहा है। अच्छा, मैं ही रस्सियों से बाँधता हूँ। ( आगे बढ़ता है )।

**वासुदेव**—क्या सुयोधन मुझे बाँधना चाहता है? अच्छा, सुयोधन के सामर्थ्य को देखता हूँ। ( विश्वरूप आकार को धारण करते हैं )।

**दुर्योधन**—हे दूत,

---

**करितुरगेति**। करितुरगनिहन्ता-करीच = हस्ती च तुरगश्च = अश्वश्चेति करितुरगौ तयोः निहन्ता = विनाशकः, कंसहन्ता-कंसस्य हन्ता = वधकर्ता, पशुपकुलनिवासात्-पशून् पालयन्तीति पशुपाः = आभीराः तेषां कुलम् = वंशः तस्मिन् निवासः तस्मात्, नीचकुलनिवासादिति भावः, आनुजीव्यानभिज्ञः-अनुजीविनः = दूतस्य सेवकस्य वा व्यवहारः = वर्तनम् आनुजीव्यम् = दौत्यम् सेवकभावो वा तस्य अनभिज्ञः = अपरिचितः, हतभुजबलवीर्यः-हतम् = विनष्टम् भुजयोः = बाह्वोः बलम् = ओजः वीर्यम् = पराक्रमश्च यस्य स तादृशः, पार्थिवानाम् = राज्ञाम्, मादृशानां राज्ञामिति भावः, समक्षम् = पुरः, स्ववचनकृतदोषः-स्ववचनेन = स्ववाक्येन कृतः = सम्पादितः दोषः = ममावमाननारूपोऽपराधः येन सः, सः = तादृशः, एषः = अयम्, कृष्णः = वासुदेवः, शीघ्रम् = झटिति, बध्यताम् = बद्धः क्रियताम्। मालिनी छन्दः ॥ ३९ ॥

सृजसि यदि समन्ताद् देवमायाः स्वमायाः
प्रहरसि यदि वा त्वं दुर्निवारैः सुरास्त्रैः ।
हयगजवृषभाणां पातनाज्जातदर्पो
नरपतिगणमध्ये बध्यसे त्वं मयाद्य ॥ ४० ॥

आः तिष्ठेदानीम् । कथं न दृष्टः केशवः । अयं केशवः । अहो ह्रस्वत्वं केशवस्य । आः तिष्ठेदानीम् । कथं न दृष्टः केशवः । अयं केशवः । अहो दीर्घत्वं केशवस्य । कथं न दृष्टः केशवः । अयं केशवः । सर्वत्र मन्त्रशालायां केशवा भवन्ति । किमिदानीं करिष्ये । भवतु, दृष्टम् । भो भो राजानः ! एकेनैकः केशवो बध्यताम् । कथं स्वयमेव पाशैर्बद्धाः पतन्ति राजानः । साधु भो जम्भक ! साधु !

मत्कार्मुकोदरविनिःसृतबाणजालै-
र्विद्धक्षरत्क्षतजरञ्जितसर्वगात्रम् ।
पश्यन्तु पाण्डुतनयाः शिबिरोपनीतं
त्वां बाष्परुद्धनयनाः परिनिःश्वसन्तः ॥ ४१ ॥

( निष्क्रान्तः । )

**वासुदेवः**—भवतु, पाण्डवानां कार्यमहमेव साधयामि । भोः सुदर्शन ! इतस्तावत् ।

---

**अन्वयः**—यदि, देवमायाः, स्वमायाः, समन्तात्, सृजसि; यदि वा, त्वम्, दुर्निवारैः, सुरास्त्रैः, प्रहरसि; अद्य, नरपतिगणमध्ये, हयगजवृषभाणाम्, पातात्, जातदर्पः, त्वम्, मया, बध्यसे ॥ ४० ॥

**शब्दार्थः**—यदि=चाहे, देवमायाओं=देवमाया को, स्वमायाः=अपनी मायाओं को, समन्तात्=चारं ओर, सृजसि=पैदा कर लो; यदि वा=अथवा, त्वम्=तुम, दुर्निवारैः=न रोके जा सकनेवाले, सुरास्त्रैः=देवास्त्रों से, प्रहरसि=प्रहार करो, अद्य=आज, नरपतिगण-मध्ये=राज-समूह के बीच, हयगजवृषभाणाम्=घोड़ा, हाथी तथा बैल के, पातात्=वध से, जातदर्पः=गर्वीले, त्वम्=तुम, मया=मेरे द्वारा, बध्यसे=बाँधे जाओगे ॥ ४० ॥

**सृजसीति** । यदि=चेत्, देवमायाः=सुरमायाः, अथवा स्वमायाः=स्वविशिष्टाः मायाः, समन्तात्=चतसृषु दिक्षु, सृजसि=निर्मासि; यदि वा=अथवा, त्वम्=वासुदेवः, दुर्निवारैः=अप्रतिहतैः, सुरास्त्रैः=दिव्यास्त्रैः, प्रहरसि=प्रहारं करोषि; अद्य=अस्मिन् दिने, नरपतिगण-मध्ये—नरपतीनाम्=राज्ञाम् गणः=समूहः तस्य मध्ये=अन्तराले, हयगजवृषभाणाम्—हयश्च=अश्वश्च, केशिघोटकश्चेत्यर्थः, गजश्च=हस्ती च, मल्लिकापीडगजश्चेत्यर्थः, वृषभश्च=बलीवर्दश्च, वृषभासुरश्चेत्यर्थः, इति हयगजवृषभास्तेषाम्, पातात्=पातनात्, वधादिति यावत्, जातदर्पः—जातः=उत्पन्नः दर्पः=स्मयः यस्य सः, त्वम्=वासुदेवः, बध्यसे=संयम्यसे । मालिनी छन्दः । लक्षणम्—'ननमयययुतेयं मालिनी भोगिलोकैः' ॥ ४० ॥

**अन्वयः**—मत्कार्मुकोदरविनिःसृतबाणजालैः, विद्धक्षरत्क्षतजरञ्जितसर्वगात्रम्, शिबिरोपनीतम्, त्वाम्, बाष्परुद्धनयनाः, परिनिःश्वसन्तः, पाण्डुतनयाः, पश्यन्तु ॥ ४१ ॥

चाहे देवमाया या अपनी माया को चारों ओर पैदा कर लो, अथवा तुम न रोके जा सकने वाले देवास्त्रों से प्रहार करो; आज राज-समूह के बीच घोड़ा-हाथी तथा बैल के वध से गर्वाले तुम मेरे द्वारा बाँधे जाओगे ॥ ४० ॥

आह ! रुको अब । क्या केशव ( इधर ) नहीं दिखलाई पड़ा ? यह केशव है । केशव की छोटाई आश्चर्यजनक है । आह ! रुको अब । क्या केशव नहीं दिखलाई पड़ा ? यह केशव है । केशव की ऊँचाई आश्चर्यजनक है । क्या केशव नहीं दिखलाई पड़ा ? यह है केशव । मन्त्रशाला में चारों ओर केशव ही केशव पैदा हो रहे हैं । अब क्या करूँ ? अच्छा; समझ में आ गया । हे हे राजाओं, एक-एक के द्वारा एक-एक केशव बाँध लिया जाय । क्या स्वयं ही रस्सियों से बँधकर राजा लोग गिर रहे हैं ? वाह रे मायावी ! वाह !

**विशेष-जम्भक**—कृष्ण दुर्योधन को अपना विश्वरूप दिखला रहे हैं । वे कभी छोटे होते हैं तो कभी विशाल । कभी पास में आते हैं तो कभी दूर निकल जाते हैं । चारों ओर विभिन्न प्रकार के केशव ही केशव दिखलाई पड़ रहे हैं । अतः वह उन्हें जम्भक = जादूगर कह रहा है।

मेरे धनुष के मध्य भाग से छूटे हुये बाणों की बौछारों से बींधे गये ( अतः ) बहते हुये रक्त से रंगे हुए समूचे शरीर वाले, शिबिर में लाये गये तुमको, आँसुओं से रुँधी हुई आँखों वाले, उसासें भरते हुए पाण्डु के पुत्र ( युधिष्ठिर आदि ) देखेंगे ॥ ४१ ॥

( निकल गया )

**वासुदेव**—अच्छा, पाण्डवों का कार्य करूँगा । हे सुदर्शन, जरा इधर आओ ।

---

**शब्दार्थः**—मत्कार्मुकोदरविनिःसृतबाणजालैः = मेरे धनुष के मध्य भाग से छूटे हुये बाणों की बौछारों से, विद्धक्षरत्क्षतजरञ्जितसर्वगात्रम् = बींधे गये ( अतः ) बहते हुये रक्त से रंगे हुए समूचे शरीर वाले, शिबिरोपनीतम् = शिबिर में लाये गये, त्वाम् = तुमको, बाष्परुद्धनयनाः = आँसुओं से रुँधी हुई आँखों वाले, विनिःश्वसन्तः = उसासें भरते हुए, पाण्डुतनयाः = पाण्डु के पुत्र ( युधिष्ठिर आदि ), पश्यन्तु = देखें ॥ ४१ ॥

दुर्योधनः स्वनिश्चितां प्रतिकृतिं सूचयति—**मत्कार्मुकेत्यादिना** । मत्कार्मुकोदरविनिःसृत-बाणजालैः—मम = दुर्योधनस्य कार्मुकम् = धनुः तस्य उदरात् = मध्यभागात् विनिःसृताः = प्रक्षिप्ताः ये बाणाः = शराः तेषां जालैः = समूहैः, विद्धक्षरत्क्षतजरञ्जितसर्वगात्रम्—विद्धम् = व्रणितम् अतः क्षरत् = प्रवहत् यत् क्षतजम् = रक्तम् तेन रञ्जितञ्च = स्नातञ्च सर्वगात्रम् = सर्वशरीरम् यस्य सः तम्, शिबिरोपनीतम्—शिबिरे = स्वपटवासस्थाने । उपनीतम् = प्रापितम्, त्वाम् = श्रीकृष्णम्, बाष्परुद्धनयनाः—बाष्पैः = अश्रुभिः रुद्धानि = आच्छादितानि नयनानि = नेत्राणि येषां ते तादृशाः, विनिःश्वसन्तः = उच्छ्वासं गृह्णन्तः, पाण्डुतनयाः = पाण्डोः पुत्राः युधिष्ठिरादयः, पश्यन्तु = अवलोकयन्तु । न चिरात् त्वां बाणैर्विद्धं करिष्यामीति दृढोक्तिः । वसन्ततिलका छन्दः । तल्लक्षणम्—'उक्ता वसन्ततिलका तभजा जगौ गः' ॥ ४१ ॥

( ततः प्रविशति सुदर्शनः । )

**सुदर्शनः**—एष भोः !

श्रुत्वा गिरं भगवतो विपुलप्रसादा-
न्निर्धावितोऽस्मि परिवारिततोयदौघः ।
कस्मिन् खलु प्रकुपितः कमलायताक्षः
कस्याद्य मूर्धनि मया प्रविजृम्भितव्यम् ॥ ४२ ॥

क्व नु खलु भगवान् नारायणः ?

अव्यक्तादिरचिन्त्यात्मा लोकसंरक्षणोद्यतः ।
एकोऽनेकवपुः श्रीमान् द्विषद्बलनिषूदनः ॥ ४३ ॥

( विलोक्य ) अये अयं भगवान् हस्तिनापुरद्वारे दूतसमुदाचारेणोपस्थितः । कुतः खल्वापः, कुतः खल्वापः । भगवति आकाशगङ्गे ! आपस्तावत् । हन्त स्रवति । ( आचम्योपसृत्य ) जयतु भगवान् नारायणः ( प्रणमति । )

**वासुदेवः**—सुदर्शन ! अप्रतिहतपराक्रमो भव ।

**सुदर्शनः**—अनुगृहीतोऽस्मि ।

**वासुदेवः**—दिष्टया भवान् कर्मकाले प्राप्तः ।

**सुदर्शनः**—कथं कथं कर्मकाल इति । आज्ञापयतु भगवानाज्ञापयतु ।

---

**अन्वयः**—विपुलप्रसादात्, भगवतः, गिरम्, श्रुत्वा, परिवारिततोयदौघः, निर्धावितः, अस्मि; कमलायताक्षः, कस्मिन्, खलु, प्रकुपितः; मया, अद्य, कस्य, मूर्धनि, प्रविजृम्भितव्यम् ॥ ४२ ॥

**शब्दार्थः**- विपुलप्रसादात् = अत्यन्त कृपा से, भगवतः = भगवान् की, गिरम् = वाणी को, श्रुत्वा = सुन कर, परिवारिततोयदौघः = मेघ-मालाओं को विदीर्ण करता हुआ, निर्धावितः = दौड़ पड़ा, अस्मि = हूँ, कमलायताक्षः = कमलनेत्र ( श्रीकृष्ण ), कस्मिन् = किसके ऊपर, खलु = यह वाक्य को सुन्दर बनाने के लिये प्रयुक्त हुआ है, प्रकुपितः = क्रुद्ध हुये हैं, मया = मेरे द्वारा, अद्य = आज, कस्य = किसके, मूर्धनि = मस्तक पर, प्रविजृम्भितव्यम् = पराक्रम प्रदर्शित करना है ? ॥ ४२ ॥

**श्रुत्वेति** । विपुलप्रसादात्–विपुलः = महांश्चासौ प्रसादः = अनुग्रहः तस्मात्, सेवाकर्मण्यप्याह्वाने भगवतः कृपैवेति, भगवतः = सर्वैश्वर्यसम्पन्नस्य श्रीकृष्णस्येत्यर्थः, गिरम् = वाणीम्, श्रुत्वा = आकर्ण्य, परिवारिततोयदौघः–परितः = सर्वतः वारितः = अपसारितः तोयदानाम् = मेघानाम् ओघः = समूहः येन सः तादृशः, निर्धावितः = प्रधावितः, वेगेनागतः इत्यर्थः, अस्मि, कमलायताक्षः—कमले = जलजे इव आयते = विशाले अक्षिणी = नेत्रे यस्य तादृशः, श्रीकृष्णः इत्यर्थः, कस्मिन् = कस्मिन् जने, खल्विति वाक्यालङ्कारे, प्रकुपितः = क्रुद्धः, मया = सुदर्शनेनेत्यर्थः अद्य = सम्प्रति, कस्य = कस्य जनस्य, मूर्धनि = मस्तके, प्रविजृम्भितव्यम् = पराक्रमितव्यम् । वसन्ततिलका छन्दः ॥ ४२ ॥

( तदनन्तर सुदर्शन प्रवेश करता है )

**सुदर्शन**—है यह ( मैं )—

अत्यन्त कृपा से भगवान् की वाणी सुनकर मेघ मालाओं को विदीर्ण करता हुआ दौड़ पड़ा हूँ। कमल-नेत्र ( श्रीकृष्ण ) किसके ऊपर क्रुद्ध हुये हैं ? मेरे द्वारा आज किसके मस्तक पर पराक्रम प्रदर्शित करना है ? ॥ ४२ ॥

भगवान् नारायण कहाँ पर होंगे ?

प्रकृति के भी कारण, अचिन्त्य स्वरूपवाले ( अर्थात् मन एवं बुद्धि की पहुँच से परे स्वरूप वाले ), संसार की रक्षा के लिए तत्पर, अद्वितीय, बहुत शरीर धारण करने वाले, शक्ति-सम्पन्न, शत्रु-सैन्य के विनाशक ( नारायण कहाँ हैं ) ? ॥ ४३ ॥

( देख कर ) अरे, यह भगवान् हस्तिनापुर के दरवाजे पर दूत के रूप से उपस्थित हैं। जल कहाँ है, जल कहाँ है ? भगवती आकाशगङ्गे सम्प्रति जल ( चाहिए )। वाह ! ( पानी ) गिर रहा है। ( आचमन करके, पास में जाकर ) भगवान् नारायण ! विजयी बनें। ( प्रणाम करता है )।

**वासुदेव**—सुदर्शन, अजेय पराक्रम वाले बनो ( अर्थात् तुम्हारा पराक्रम अजेय हो )।

**सुदर्शन**—अनुगृहीत हूँ ।

**वासुदेव**—भाग्यवश आप काम के समय आ गये ।

**सुदर्शन**—क्या क्या ? काम के समय ( आये हैं )—ऐसा (आप कह रहे हैं ?) आदेश दें आप आदेश दें ।

---

**अन्वयः**—अव्यक्तादिः, अचिन्त्यात्मा, लोकसंरक्षणोद्यतः, एकः, अनेकवपुः, श्रीमान्, द्विषद्बलनिपूदनः, ( क्व, आस्ते ) ? ॥ ४३ ॥

**शब्दार्थः**—अव्यक्तादिः = प्रकृति के भी कारण, अचिन्त्यात्मा = अचिन्त्य स्वरूपवाले ( अर्थात् मन एवं बुद्धि की पहुँच से परे स्वरूप वाले ), लोकसंरक्षणोद्यतः = संसार की रक्षा के लिये तत्पर, एकः = अद्वितीय, अनेकवपुः = बहुत शरीर धारण करने वाले, श्रीमान् = शक्ति-सम्पन्न, द्विषद्बलनिपूदनः = शत्रु-सैन्य के विनाशक, ( क्व = कहाँ, आस्ते = हैं ? ) ॥ ४३ ॥

लोकवैलक्षण्य-प्रतिपादनपूर्वकं श्रीकृष्णं विशिनष्टि सुदर्शनः—**अव्यक्तादिरिति**। अव्यक्तादिः—अव्यक्तस्य = प्रकृतेः आदिः = कारणम्, अचिन्त्यात्मा-अचिन्त्यः = न चिन्तितुं योग्यः आत्मा = स्वरूपम् यस्य सः, लोकसंरक्षणोद्यतः-लोकस्य = जगतः संरक्षणे = गोपने उद्यतः = तत्परः, एकः = अद्वितीयः, अनेकवपुः-अनेकानि = बहूनि वपूंषि = शरीराणि यस्य सः तादृशः, श्रीमान् = शक्तिसम्पन्नः, द्विषद्बलनिपूदनः—द्विषताम् = शत्रूणाम् [illegible] निपूदनः = विनाशकः, 'क्व आस्ते' इति शेषः। अत्र व्याजोक्तिरलङ्कारः। अनुष्टुप् छन्दः ॥ ४३ ॥

किं मेरुमन्दरकुलं परिवर्तयामि
संक्षोभयामि सकलं मकरालयं वा ।
नक्षत्रवंशमखिलं भुवि पातयामि
नाशक्यमस्ति मम देव ! तव प्रसादात् ॥ ४४ ॥

**वासुदेवः**—भोः सुदर्शन ! इतस्तावत् । भोः सुयोधन !

यदि लवणजलं वा कन्दरं वा गिरीणां
ग्रहगणचरितं वा वायुमार्गं प्रयासि ।
मम भुजबलयोगप्राप्तसंजातवेगं
भवतु चपल ! चक्रं कालचक्रं तवाद्य ॥ ४५ ॥

**सुदर्शनः**—भोः सुयोधनहतक ! ( इति पुनर्विचार्य ) प्रसीदतु प्रसीदतु भगवान् नारायणः ।



महीभारापनयनं कर्तुं जातस्य भूतले ।
अस्मिन्नेव गते देव ! ननु स्याद् विफलः श्रमः ॥ ४६ ॥

---

**अन्वयः**—किम्, मेरुमन्दरकुलम्, परिवर्तयामि ? वा, सकलम्, मकरालयम्, संक्षोभयामि ? अखिलम्, नक्षत्रवंशम्, भुवि, पातयामि ? देव, तव, प्रसादात्, मम, ( किञ्चिदपि ), अशक्यम्, न, अस्ति ॥ ४४ ॥

**शब्दार्थः**—किम् = क्या, मेरुमन्दरकुलम् = मेरु और मन्दर समूह को, परिवर्तयामि = उलट-पलट दूँ ? वा = अथवा, सकलम् = सम्पूर्ण, मकरालयम् = सागर को, संक्षोभयामि = मथ डालूँ ? अखिलम् = समग्र, नक्षत्र-वंशम् = नक्षत्र-समूह को, भुवि = भूतल पर, पातयामि = गिरा दूँ ? देव = भगवन्, तव = आपके, प्रसादात् = अनुग्रह से, मम = मेरे लिये, ( किञ्चिदपि = कुछ भी ), अशक्यम् = असम्भव, न = नहीं, अस्ति = है ॥ ४४ ॥

**किं मेरुमन्दरकुलमिति ।** किमिति प्रश्ने, मेरुमन्दरकुलम्–मेरुश्च = सुमेरुश्च मन्दरश्च = मन्दराचलश्चेति मेरुमन्दरौ तयोः कुलम् = शृङ्खला-समूहम्, परिवर्तयामि = उत्पाटयान्यत्र स्थापयामि, वा = अथवा, सकलम् = समग्रम्, मकरालयम् = सागरम्, संक्षोभयामि = मथ्नामि, अखिलम् = समग्रम्, नक्षत्राणाम् = ताराणाम्, वंशम् = कुलम्, भुवि = पृथिव्याम्, पातयामि = पतितं करोमि, देव = भगवन्, तव = भवतः, प्रसादात् = अनुग्रहात्, मम = तवायुधभूतस्य सुदर्शनस्य, किञ्चिदपीति शेषः, अशक्यम् = असम्भवम्, न = नहि, अस्ति = वर्तते । आदिशतु भवान् सर्वं कर्तुमहं समर्थ इति भावः । वसन्ततिलका छन्दः ॥ ४४ ॥

**अन्वयः**—हे चपल, यदि, लवणजलम्, वा, गिरीणाम्, कन्दरम्, वा, ग्रहगणचरितम्, वा, वायुमार्गम्, प्रयासि; अद्य, मम, भुजबलयोगप्राप्तसञ्जातवेगम्, चक्रम्, तव, कालचक्रम् भवतु ॥ ४५ ॥

**शब्दार्थः**—हे चपल = हे चञ्चल, यदि = यदि, लवणजलम् = क्षार-सागर को, वा = अथवा, ग्रहगणचरितम् = ताराओं के मार्ग को, वा = अथवा, वायुमार्गम् = वायु-पथ को, प्रयासि = जाते हो; अद्य = आज, मम = मेरी, भुजबलयोगप्राप्तसञ्जातवेगम् = भुजाओं के बल के

**वासुदेव**—सुदर्शन, क्रोध के कारण ( मैंने ) उचित व्यवहार का ख्याल नहीं किया। जाइये ( आप ) अपने स्थान को ही।

**सुदर्शन**—भगवान् नारायण जैसी आज्ञा दे रहे हैं ( वैसा ही करूँगा )। क्या-क्या ( दुर्योधन श्रीकृष्ण को ) 'गोपालक' ऐसा ( कह रहा है )। ये पूज्य तीन पगों से त्रिलोकी को लाँघने वाले नारायण ही हैं। आप लोग ( इनकी ) शरण में जायँ। अच्छा चलता हूँ। अरे, यह भगवान् का अस्त्र-श्रेष्ठ शार्ङ्ग ( धनुष ) आ गया।

शत्रु-समूह के लिये एकमात्र काल, दुर्बल तथा कोमल एवं ललित अङ्गों को धारण करने-वाला, स्त्री-स्वभाव ( अर्थात् स्त्री-आकार ) से युक्त, श्रीकृष्ण के हाथ से पकड़ा गया मध्यभाग वाला, सुवर्ण से जड़ी गई पीठवाला, कृष्ण के बगल में, नूतन जल भरे बादल के पास में मनोहर बिजली की रेखा जैसा सुशोभित हो रहा है ॥ ४७ ॥

**विशेष—स्त्रीस्वभावोपपन्नम्**—स्त्री का शरीर कटि-भाग में अत्यन्त क्षीण तथा ऊपर एवं नीचे मोटा होता है। धनुष का आकार भी ऐसा ही होता है। यही है धनुष का स्त्री स्वभाव से युक्त होना ॥ ४७ ॥

हे शार्ङ्ग ( धनुष ), भगवान् नारायण शान्त क्रोधवाले हो गये हैं ( अर्थात् भगवान् नारायण का क्रोध शान्त हो गया है )। अपने निवास-स्थान को ही लौट जाओ। वाह ! वापस हो गया। अब चलता हूँ। अरे ! यह कौमोदकी ( गदा ) आ गई।

मणियों एवं आभूषणों से अलङ्कृत, विविध रंगों वाली माला रूप दुपट्टा को धारण करने वाली, देव-शत्रुओं के समूह के शरीर को विनष्ट करने की तृष्णा से युक्त, हिमालय की चोटी के समान, अमोघ, अत्यन्त पराक्रमशालिनी, मेघ-समूह के द्वारा अनुगमन की जाती हुई, (यह) वेग से आकाश में आ रही है ॥ ४८ ॥

---

स्त्रियः=ललनायाः स्वभावः=प्रकृतिः, आकार इति यावत्, तेन उपपन्नम्=युक्तम्, धनुषः आकारः स्त्रीशरीरमिव मध्ये क्षामं प्रान्ते स्थूलं भवतीति ज्ञेयम्, हरिकरधृतमध्यम्–हरेः= श्रीकृष्णस्य करेण=हस्तेन धृतः=गृहीतः मध्यः=मध्यभागः यस्य तत्, कनकखचितपृष्ठम्— कनकेन=सुवर्णेन खचितम्=संयुक्तम् पृष्ठम्=पृष्ठभागो यस्य तत्, कृष्णस्य=हरेः, पार्श्वे= समीपे, नवसलिलदपार्श्वे—नवः=नूतनश्चासौ सलिलदः=मेघः तस्य पार्श्वे=समीपे, चारुः= शोभना, विद्युल्लता=सौदामिनीरेखा ( 'तडित् सौदामिनी विद्युत्' इत्यमरः ), इव=यथा, भाति=शोभते। अत्र सङ्करालङ्कारः। मालिनी वृत्तम्। लक्षणम्—'ननमयययुतेयं मालिनी भोगिलोकैः ॥ ४७ ॥

**भो भो इति**। प्रशान्तरोषः–प्रशान्तः=दूरीभूतः रोषः=कोपः यस्य स तादृशः। स्वनिलयम्=स्ववासस्थानम्। हन्तेति हर्षेऽव्ययपदम्। प्राप्ता=आगता ॥

**अन्वयः**—मणिकनकविचित्रा, चित्रमालोत्तरीया, सुररिपुगणगात्रध्वंसने, जाततृष्णा, गिरिवरतटरूपा, दुर्निवारा, अतिवीर्या, मेघवृन्दानुयाता, (इयम्) शीघ्रम् नभसि व्रजति ॥ ४८ ॥



**शब्दार्थः**—मणिकनकविचित्रा=मणियों एवं आभूषणों से अलङ्कृत, चित्रमालोत्तरीया=

हे कौमोदकि ! प्रशान्तरोषो भगवान् नारायणः । हन्त निवृत्ता । यावद् गच्छामि । अये अयं पाञ्चजन्यः प्राप्तः ।

पूर्णेन्दुकुन्दकुमुदोदरहारगौरो
　　नारायणाननसरोजकृतप्रसादः ।
यस्य स्वनं प्रलयसागरघोषतुल्यं
　　गर्भा निशम्य निपतन्त्यसुराङ्गनानाम् ॥ ४९ ॥

हे पाञ्चजन्य ! प्रशान्तरोषो भगवान् । हन्त निवृत्तः । अये नन्दकासिः प्राप्तः ।

वनिताविग्रहो युद्धे महासुरभयङ्करः ।
प्रयाति गगने शीघ्रं महोल्केव विभात्ययम् ॥ ५० ॥

हे नन्दक ! प्रशान्तरोषो भगवान् । गम्यताम् । हन्त निवृत्तः । यावद् गच्छामि । अये एतानि भगवदायुधवराणि ।

---

विविध रंगों वाली मालारूप दुपट्टा को धारण करनेवाली, सुररिपुगणगात्रध्वंसने = देव-शत्रुओं के समूह के शरीर को विनष्ट करने की, जाततृष्णा = तृष्णा से युक्त, गिरिवरतटरूपा = हिमालय की चोटी के समान, दुर्निवारा = अमोघ, अतिवीर्या = अत्यन्त पराक्रम शालिनी, मेघवृन्दानुयात्रा = मेघ-समूह के द्वारा अनुगमन की जाती हुई, ( इयम् = यह ), शीघ्रम् = वेग से, नभसि = आकाश में, व्रजति = आ रही है ॥ ४८ ॥

कौमोदकीं वर्णयति यथावसरम्—**मणिकनकविचित्रेति**। मणिकनकविचित्रा–मणिभिः = रत्नैः कनकैः = सुवर्णैश्च विचित्रा = विभूषिता, चित्रमालोत्तरीया–चित्रा = विविधरङ्गरञ्जिता चासौ माला = स्रक् एव उत्तरीयम् = ऊर्ध्ववस्त्रम् यस्याः सा, सुररिपुगणगात्रध्वंसने—सुराणाम् = देवानाम् रिपवः = शत्रवः तेषां गणः = समूहः तस्य गात्रस्य = शरीरस्य ध्वंसने = विनाशने, जाततृष्णा–जाता = उत्पन्ना तृष्णा = प्रबल अभिलाषो यस्याः सा, गिरिवरतटरूपा–गिरिवरः = पर्वतश्रेष्ठो हिमालयः तस्य तटम् = शृङ्गः इव रूपम् = आकारः यस्याः सा तादृशी, दुर्निवारा = अमोघा, अतिवीर्या = अतिपराक्रमशालिनी, मेघवृन्दानुयात्रा–मेघवृन्दम् = जलदसमूहः अनुयात्रा = अनुगम् यस्याः सा तादृशी, इयं कौमोदकीति गदादध्याहार्यम्, शीघ्रम् = झटिति, नभसि = आकाशे, व्रजति = गच्छति, आगच्छतीति भावः । उपमालङ्कारः । मालिनी छन्दः ॥ ४८ ॥

**अन्वयः**—पूर्णेन्दुकुन्दकुमुदोदरहारगौरः, नारायणाननसरोजकृतप्रसादः, (अयम्, प्राप्तः) यस्य, ( अस्य ), प्रलयसागरघोषतुल्यम्, स्वनम्, निशम्य, असुराङ्गनानाम्, गर्भाः निपतन्ति ॥ ४९ ॥

**शब्दार्थः**—पूर्णेन्दुकुन्दकुमुदोदरहारगौरः = पूर्ण चन्द्रमा, कुन्द, कुमुद के भीतरी भाग तथा मोतियों की माला की तरह धवल, नारायणाननसरोजकृतप्रसादः = विष्णु के मुख-कमल के द्वारा की गई कृपावाला, ( अयम् = यह, प्राप्तः = आ गया है ), यस्य = जिस, ( अस्य = इसके ), प्रलयसागरघोषतुल्यम् = प्रलयकालीन समुद्र के गर्जन के समान, स्वनम् = ध्वनि

हे कौमोदकी ( गदा ), भगवान् नारायण का कोप शान्त हो चुका है। वाह ! लौट गई। अब चलता हूँ। अरे ! यह पाञ्चजन्य ( नामक भगवान् नारायण का शंख ) आ गया।

पूर्ण चन्द्रमा, कुन्द, कुमुद के भीतरी भाग तथा मोतियों की माला की तरह धवल, विष्णु के मुख-कमल के द्वारा की गई कृपावाला ( अर्थात् विष्णु के मुख से बजाया जाने वाला ), यह ( पाञ्चजन्य ) आ गया है। जिस ( इसके ) प्रलयकालीन समुद्र के गर्जन के समान ध्वनि को सुनकर राक्षसों की स्त्रियों के पेट के बच्चे गिर पड़ते हैं॥ ४९॥

हे पाञ्चजन्य, भगवान् का क्रोध शान्त हो चुका है। लौट जाओ। वाह ! वापस हो गया। अरे ! नन्दक ( नामक ) खड्ग आ गया।

स्त्री की तरह शरीरवाला ( अर्थात् क्षीणकाय ), युद्ध में बड़े-बड़े राक्षसों के लिये अत्यन्त भीषण यह ( असि ) आकाश में तेजी से जा रहा है, तथा विशाल उल्का की तरह शोभित हो रहा है॥ ५०॥

हे नन्दक, भगवान् का क्रोध शान्त हो चुका है, ( वापस ) चले जाओ। वाह ! लौट गया। अब ( मैं भी ) चलता हूँ। अरे ! भगवान् के ये श्रेष्ठ अस्त्र हैं।

---

निशम्य = सुन कर, असुराङ्गनानाम् = राक्षसों की स्त्रियों के, गर्भाः = पेट के बच्चे, निपतन्ति = गिर पड़ते हैं॥ ४९॥

अवसरागतं पाञ्चजन्यशङ्खं वर्णयति—**पूर्णेन्द्विति**। पूर्णेन्दुकुन्दकुमुदोदरहारगौरः—पूर्णः = समग्रश्चासौ इन्दुश्च = चन्द्रश्च कुन्दश्च = माध्यपुष्पञ्च ('माध्यं कुन्दम्' इत्यमरः) कुमुदोदरश्च = कैरवाभ्यन्तरभागश्च हारश्च = मुक्तामाला च त इव गौरः = धवलः नारायणेत्यादिः—नारायणस्य = भगवतो विष्णोः आननसरोजेन = मुखकमलेन कृतः = विहितः प्रसादः = अनुग्रहः यस्मिन् सः अयं पाञ्चजन्यः प्राप्तः इति शेषः, यस्य अस्य, प्रलयसागरघोषतुल्यम्—प्रलये = प्रलयकाले सागरस्य = समुद्रस्य घोषः = गर्जनमिव, तेन तुल्यम् = समानम्, स्वनम् = गर्जनम्, निशम्य = श्रुत्वा, असुराङ्गनानाम् = दानवस्त्रीणाम्, गर्भाः = भ्रूणाः, निपतन्ति = स्रवन्ति। मालोपमालङ्कारः। वसन्ततिलका छन्दः॥ ४९॥

**अन्वयः**—वनिताविग्रहः, युद्धे, महासुरभयङ्करः, अयम्, गगने, शीघ्रम्, प्रयाति; च, महोल्का, इव, विभाति॥ ५०॥

**शब्दार्थः**—वनिताविग्रहः = स्त्री की तरह शरीरवाला, युद्धे = युद्ध में, महासुरभयङ्करः = बड़े-बड़े राक्षसों के लिये अत्यन्त भीषण, अयम् = यह, गगने = आकाश में, शीघ्रम् = तेजी से, प्रयाति = जा रहा है, च = तथा, महोल्का = विशाल उल्का की, इव = तरह, विभाति = शोभित हो रहा है॥ ५०॥

**वनितेति**। वनिताविग्रहः—वनितायाः = स्त्रियाः विग्रहः = शरीरम् इव विग्रहः = शरीरम् यस्य सः, क्षीणकाय इत्यर्थः, युद्धे = संग्रामे, महासुरभयङ्करः—महासुराणाम् = महाराक्षसानाम् भयम् = भीतिम् करोतीति तादृशः, अयम् = एष नन्दकासिः, गगने = आकाशे, शीघ्रम् = वेगेनेत्यर्थः, प्रयाति = व्रजति, च = तथा, महोल्का-महती = विशाला चासौ उल्का = पतितो नक्षत्रखण्डः, इव = यथा, विभाति = शोभते। अनुष्टुप् छन्दः॥ ५०॥

सोऽयं खड्गः खरांशोरपहसिततनुः स्वैः करैर्नन्दकाख्यः
सेयं कौमोदकी या सुररिपुकठिनोरःस्थलक्षोददक्षा।
सैषा शार्ङ्गाभिधाना प्रलयघनरवज्यारवा चापरेखा
सोऽयं गम्भीरघोषः शशिकरविशदः शङ्खराट् पाञ्चजन्यः ॥५

हे शार्ङ्ग! कौमोदकि! पाञ्चजन्य!
दैत्यान्तक नन्दक! शत्रुवह्ने!।
प्रशान्तरोषो भगवान् मुरारिः
स्वस्थानमेवात्र हि गच्छ तावत् ॥ ५२ ॥

हन्त निवृत्ताः। यावद् गच्छामि। अये अत्युद्धूतो वायुः। अतितपत्यादित्यः। ...लि क्षुब्धाः सागराः। पतिताः वृक्षाः। भ्रान्ता मेघाः। प्लीना वासुकिप्रभृतयो भुजगेश्वराः।। खल्विदम्। अये अयं भगवतो वाहनो गरुडः प्राप्तः।

---

**अन्वयः**—स्वैः, करैः, खरांशोः, अपहसिततनुः, अयम्, सः, नन्दकाख्यः, खड्गः; सुररिपुकठिनोरःस्थलक्षोददक्षा, इयम्, सा, कौमोदकी; प्रलयघनरवज्यारवा, सा, शार्ङ्गाभिधाना, चापयष्टिः; गम्भीरघोषः, शशिकरविशदः, सः, अयम्, शंखराट्, पाञ्चज... (अस्ति) ॥ ५१ ॥

**शब्दार्थः**—स्वैः = अपनी, करैः = किरणों से, खरांशोः = सूर्य के, अपहसिततनुः = ... का मजाक उड़ानेवाला, अयम् = यह, सः = संसारविदित, नन्दकाख्यः = नन्दक नाम... खड्गः = खड्ग (है); या = जो, सुररिपुकठिनोरःस्थलक्षोददक्षा = देव-शत्रुओं के कठोर वक्षः... को चूर्ण करने में दक्ष, इयम् = यह, सा = वही, कौमोदकी = कौमोदकी (नामक गदा... प्रलयघनरवज्यारवा = प्रलयकालीन मेघों के गर्जन की तरह प्रत्यञ्चा की टङ्कारवाली, सा = ... विदित, एषा = यह, शार्ङ्गाभिधाना = शार्ङ्ग नामक, चापयष्टिः = धनुर्लता (है); गम्भीरघो... भयङ्कर ध्वनिवाला, शशिकरविशदः = चन्द्रमा की किरणों के समान धवल, सः = सं... विदित, अयम् = यह, शंखराट् = शंख-श्रेष्ठ, पाञ्चजन्यः = पाञ्चजन्य, (अस्ति = है) ॥ ५...

पुनः समवेतान् भगवदायुधान् वर्णयति—**सोऽयमिति**। स्वैः = स्वकीयैः ... किरणैः, खरांशोः—खराः = तीक्ष्णाः अंशवः = किरणाः यस्य तस्य, सूर्यस्येत्यर्थः, अपहसितत... अपहसिता = उपहासं प्रापिता तनुः = शरीरम्, किरणसमूह इत्यर्थः, यस्य स तादृशः, अ... एषः, सः = संसारविदितः, नन्दकाख्यः = नन्दकनामा, खड्गः = असिः; या, सुररिपु... त्यादिः—सुराणाम् = देवानाम् रिपवः = शत्रवः तेषां कठिनानाम् = कठोराणाम् उरःस्थला... वक्षःस्थलानाम् क्षोदने = विदारणे दक्षा = कुशला, इयम् = एषा, सा = पूर्वविज्ञाता, कौमोद... कौमोदकीनाम्नी गदा; प्रलयघनरवज्यारवा—प्रलये = प्रलयकाले ये घनाः = मेघाः तेषां ... गर्जनम् इव ज्यायाः = प्रत्यञ्चायाः रवः = टङ्कृतिः यस्य तादृशः, सा = भुवनविदिता, एषा = शार्ङ्गाभिधाना = शार्ङ्गनाम्नी, चापयष्टिः = धनुर्लता; गम्भीरघोषः—गम्भीरः = भीषणः ... गर्जनं यस्य सः, शशिकरविशदः—शशिनः = चन्द्रस्य कराः = किरणाः इव विशदः =